शक्यत इत्यर्थः। स्मरणाशक्यत्वे हेतुगर्भं विशेषणम्— श्रुतेर्निधिरिति। यतः श्रुतेरपि निधिवत् गुप्ततया प्रतिपाद्या, अतः अपरिच्छेद्यत्वात् स्मर्तुं न शक्यत इति भावः। विस्मरणाशक्यत्वे हेतुगर्भं विशेषणम्— दृशोरनिमेषव्रतदायिनीति। रूपोत्कर्षेण नयनयोः अनिमेषव्रतदायित्वात् विस्मर्तुमपि न शक्यत इति ॥ ६२ ॥

व्यपदिश्य मुकुन्द देवकीं
विहरन्त्या वसुदेवमन्दिरे
जनितोऽसि निजानुकम्पया
जगतीरक्षणजागरूकधीः ॥ ६३ ॥

व्यपदिश्येति। हे मुकुन्द, जगतीनां लोकानां रक्षणे जागरूकधीः, त्वम्। देवकीं व्यपदिश्य व्याजीकृत्य वसुदेवस्य मन्दिरे विहरन्त्या निजानुकम्पया जनितोऽसि; तवाविर्भावे देवकी व्याजमात्रम्। लोकरक्षणार्थमाविर्बुभूषोस्तव वसुदेवगृहं कृतार्थीकर्तव्यमिति तद्विषयिणी कृपैव तद्गृहे त्वदाविर्भावहेतुरित्यर्थः ॥ ६३ ॥

भवतो भवनाटिकां विद-
न्विभवाडम्बरिणां विडम्बिनीम्
अनपायपदाधिरोपणा-
दपवृत्ता न पुनर्निवर्तते ॥ ६४ ॥

भवत इति। विभवाडम्बरिणाम् ऐश्वर्यसंरम्भवताम्। 'आडम्बरोऽस्त्री संरम्भः' इति यादवः। विडम्बिनीम् अनुकरणोपहासकरणीम्। भवतो भवनाटिकाम् अवतारेषु संसारिताभिनयान्। विदन् जानन्

पुरुषः। अनपायपदस्य परमपदस्य अधिरोपणात्। अपवृत्तः सकलबन्धनिवृत्तः सन्। पुनः न निवर्तते; इच्छाधीनमेव तव जन्म, न तु कर्माधीनमिति तव जन्मगुह्यं जानन्नपि पररूपं जानन्निव मुच्यते इत्यर्थः ॥ ६४ ॥

सुधियस्तव गोपभूमिकां
सुभगां कौतुकसूतिकां धियाम्।
अनुविद्य गताग्र्यभूमिका-
मधिविन्देयुरनश्वरीं श्रियम् ॥ ६५ ॥

**सुधिय** इति। ब्रह्मानन्दास्वादनपरत्वात् शोभना धीः येषां ते सुधियः मुक्ताः नित्यसूरयो वा। सुभगां चक्षुष्याम्। धियां कौतुकसूतिकां कुतूहलोत्पादिकाम्। तव गोपभूमिकाम्। अनुविद्य ज्ञात्वा। गताग्र्यभूमिकां प्राप्ताग्र्यस्थानाम्; परां काष्ठामारूढामिति यावत्। अनश्वरीम् अविनाशिनीम्। श्रियम् परपदे सायुज्यरूपां भोगसंपदम् अधिविन्देयुः, सत्यामेकस्यां पत्न्यां विवाहान्तरं तस्यामधिवेदः। ततश्च यथा मनश्चक्षुषोरासक्तिकरीं कन्यां दृष्ट्वा पूर्वपत्नीमधिविन्दति, एवं परमपदे स्थिता अपि तव गोपभूमिकादर्शने दिव्यभोगसंपदमप्यनादृत्य सहचरगोपार्भकवत् त्वत्सहविहाराय स्वयमपि गोपभूमिकामेवाश्रयेरन्निति मुक्तिसंपदोऽपि त्वत्सहविहारभाग्यमाधिक्यं व्यनक्ति। अधिविन्देयुरिति हेतुमति लिङ्, संभावनायां वा ॥ ६५ ॥

दुरितानि भजन्ति संक्षयं
तपनेनेव तमांसि दीव्यता।

हृदयानि च योगिनां त्वया
कुमुदानीव विकासमिन्दुना ॥ ६६ ॥

**दुरितानीति** । दीव्यता हृदि द्योतमानेन त्वया हेतुना, तपनेन तमांसीव दुरितानि संक्षयं भजन्ति । किं च योगिनां त्वद्ध्यातॄणां हृदयानि च इन्दुना कुमुदानीव विकासम् आनन्दरूपं भजन्ति ; त्वद्ध्यानमखिलदुःखनिवृत्तेः परमानन्दोल्लासस्य च हेतुरित्यर्थः ॥ ६६ ॥

गुणतश्च विभूतितश्च ते
क्वचिदंशेऽपि समाधिकल्यजः ।
उपमानकलाविकल्पितै-
रुपलक्ष्येत जगत्प्रधानता ॥ ६७ ॥

**गुणतश्चेति** । गुणतः गुणेन ज्ञानवीर्यशक्त्यादिना । विभूतितः विभूत्या संपदा च । क्वचिदंशेऽपि समाधिकल्यजः समाभ्यधिकराहितस्य । ते तव । जगत्प्रधानता जगच्छ्रेष्ठता । उपमानकलाविकल्पितैः उपमानस्य कला कलना कल्पना तद्विषयैः वितर्कैः । उपलक्ष्येत प्रतीयेत । संभावनायां लिङ् । तव गुणतो विभूतितो वा कियत्यप्यंशे जगत्युपमानमस्ति न वेति यस्य तस्योपमानत्वं परिकल्प्य वितर्केषु क्रियमाणेषु सर्वत्र सर्वथा न्यूनतादर्शनात् तव सर्वोत्तरत्वप्रतीतिः संभाव्यते इत्यर्थः ॥

महिमार्णववर्णनोद्यताः
परिमातुं गुणमेकमक्षमाः ।
त्रपयेव भजन्त्यसीमनि
त्वयि वाचंयमतामनुश्रवाः ॥ ६८ ॥

**महिमेति** । महिमार्णववर्णनोद्यताः त्वन्महिमसागरवर्णने उद्युक्ताः । एकमपि गुणं परिमातुम् अक्षमाः परिच्छेत्तुमशक्ताः । अनुश्रवाः वेदाः । त्रपयेव असीमनि महिम्ना मर्यादारहिते । त्वयि, वाचंयमतां मौनव्रतवत्त्वं भजन्ति । 'वाचि यमो व्रते' इति खच्प्रत्ययः । 'यतो वाचो निवर्तन्ते' इत्यादिवागगोचरत्वादिप्रतिपादनमेवेह वाग्यमनं विवक्षितम् ॥ ६८ ॥

तव विश्वविदो वदामि किं
जगदेकाधिपतेर्दिशामि किम् ।
कृपणः परिपूर्णसंपदः
कमिवांशं परिपूरयाम्यहम् ॥ ६९ ॥

**तवेति** । विश्वविदः सर्वज्ञस्य । तव, किं वदामि । जगतामेकाधिपतेः तव किं दिशामि प्रयच्छामीति । कृपणः क्षुद्रोऽहम् । परिपूर्णसंपदः निरतिशयज्ञानैश्वर्यादिसमृद्धिकस्य । ते, कमिवांशं परिपूरयामि ? सर्वज्ञस्य ते न निवेदनीयमस्ति । सर्वेश्वरत्वात् न दातव्यमस्ति । न चान्यं परिपूरणीयमंशं पश्यामीति भक्तिपारवश्यात् किंचिच्चिकीर्षोः कर्तव्यमप्यनुपलभमानस्येयमुक्तिः ॥ ६९ ॥

प्रकृते किमनेन तत्प्रभो
भवदाविर्भवनस्थलीं पुनः ।
पदपद्मरजःपवित्रितां
विदधानो जहि नाथ विद्विषः ॥ ७० ॥

**प्रकृत इति** । हे प्रभो, प्रकृते प्रस्तुते कर्तव्ये । किमनेन मदीय-

किंचित्कारविचारणेन किम्?। तत् तस्मात् । भवदाविर्भवनस्थलीं मधुराम् । पुनरपि, पदपद्मरजसा पवित्रितां विदधानः कुर्वाणः सन् । विद्विषः शत्रून् जहि नाशय । हनधातोर्लोटि सिपि 'हन्तेर्जः' इति जः । नाथेत्यपि संबोधनं द्वितीयवाक्यान्वयि ॥ ७० ॥

बहुशाखविजृम्भणो महा
नवदातेन सुगन्धिनाद्य नः ।
यशसा भवतु प्रसूनवा
न्यदुसंतानमहीरुहस्तव ॥ ७१ ॥

बहुशाखेति । बह्वयः शाखाः यस्य तत् बहुशाखम्, विजृम्भणं यस्य सः । शाखाशब्देनावान्तरसंताना विवक्षिताः । महान्, नः अस्माकम् । यदुसंतान एव संतानमहीरुहः, संतानपदस्य तन्त्रेणोच्चारणम् । अवदातेन शुद्धेन । सुगन्धिना शोभनगन्धेन; सकलजनहृद्यत्वात् सुगन्धित्वोपचारः । तव यशसा शत्रुजयकीर्त्या । अद्य प्रसूनवान् भवतु; प्रसूनेन सुरद्रुम इव तव यशसा यदुवंशः परिष्कृतो भवतु इत्यर्थः ॥ ७१ ॥

शत्रुजयस्यावसरश्चायं प्राप्त इत्याह—

त्वरते रिपुरागतौ तव
स्वयमेवावसरं समर्पयन् ।
नतरक्षणकिंवदन्त्यसौ
न विलोपं भुवि यातु तावकी ॥ ७२ ॥

त्वरत इति । रिपुः कंसः । स्वयमेवावसरं समर्पयन् जयावसरं

प्रयच्छन्। तव आगतौ त्वरते। एवं प्राप्ते अवसरे नोपेक्षणीयमित्याह—नतेति। तावकी त्वदीया। नतरक्षणकिंवदन्ती प्रणतरक्षणविषयिणी जनश्रुतिः लोकवार्ता। भुवि विलोपं न यातु; आश्रितरक्षणार्थमेवावतरणम्। तन्नोपेक्षणीयमिति भावः ॥ ७२ ॥

**स्वयमेव समेयुषां वधे**
**विमतानां क्षितिभारजन्मनाम्।**
**मृगयामिव भावयन्त्यसौ**
**महती संपदुपस्थिताद्य ते ॥ ७३ ॥**

**स्वयमिति**। वधे स्वेषां वधे निमित्ते। स्वयमेव, समेयुषां समेतानाम्। क्षितिभारजन्मनां क्षितेर्भारकरं जन्म येषाम्। विमतानां रिपूणां मृगकल्पानाम्। मृगयामिव भावयन्ती संपादयन्ती। असौ महती संपत् मधुराप्रस्थानरूपा, महासंपत्तिहेतुत्वात् तथाध्यवसायः। ते तव। अद्य, उपस्थिता संनिहिता ॥ ७३ ॥

**शतकोटिसहस्रसारवा-**
**न्मथनं प्राप्स्यति मातुलस्त्वया।**
**व्यसनं विपदप्यनेहसा**
**विनिपातश्च न कस्य कर्मिणः ॥ ७४ ॥**

**शतकोटीति**। शतकोटिसहस्रसारवान् कुलिशसहस्रबलवान्। तव मातुलः कंसः। त्वया मथनं प्राप्स्यति। तथा बलशालिनः कथं मथनं भविष्यति? कथं च मातुलस्य मथनं कर्तव्यम्? इत्यत्राह—व्यसनमिति। व्यसनम् अनुचितोद्योगः। विपत् तन्मूला द्विषदामन्त्र-

णादिरूपा । विनिपातः तन्मूलं स्मरणं च । अनेहसा कालेन । कस्य कर्मिणः न भवति? सर्वस्यापि कर्मवश्यस्य भवतीत्यर्थः । ततश्च कंसस्य त्वद्रोहरूपं व्यसनं प्राप्तमेव । तन्मूलौ विपद्विनिपातौ भविष्यतः इति भावः । 'अन्तर्धौ येनादर्शनमिच्छति' इतिवत् उभयप्राप्तौ कर्मणि षष्ठीनियमात त्वयेति कर्तरि तृतीया । कर्मिण इति व्रीह्यादित्वादिनिप्रत्ययः ॥ ७४ ॥

अभिसंहितमौग्रसेनिना
कथितं च क्रमशो व्यजिज्ञपत् ।
कुलजः कुटिलाशयोज्झितः
कुशलं पृष्टवते मधुद्विषे ॥ ७५ ॥

**अभिसंहितमिति** । कुलजः ज्ञातिरक्रूरः । कुशलं पृष्टवते, मधुद्विषे कृष्णाय । औग्रसेनिना उग्रसेनसुतेन कंसेन । अभिसंहितं विचिन्तितम् । कथितं च 'दमनीयोऽयमरूढयौवनः' इत्यादिना स्वस्मै कथितं च वृत्तान्तम् । कुटिलाशयोज्झितः ज्ञातित्वकंससुहृत्त्वप्रयुक्तदुष्टाशयरहितः सन् । क्रमशो व्यजिज्ञपत् विज्ञापयामास ॥ ७५ ॥

अपरेद्युरशेषतो नय-
न्सहसा गोपगणान्स यादवः ।
स्थितमध्वनि रामकेशवौ
रथमारोपयदुग्र्यरंहसम् ॥ ७६ ॥

**अपरेद्युरिति** । सः यादवः अपरेद्युः तदनन्तरदिवसे । अशेषतः सर्वान् । गोपगणान् सहसा नयन् सन्, अध्वनि मार्गे । स्थितम्,

अभ्यरंहसम् अनुत्तमवेगम् । रथं रामकेशवौ आरोपयत् आरोपयति स्म । 'रुहः पोऽन्यतरस्याम्' इति पः । आरोपस्य गतिविशेषत्वात् 'गति-बुद्धि—' इत्यादिना द्विकर्मकता ॥ ७६ ॥

**व्रजतोरथ वल्लवस्त्रियो**
**बलभद्रस्य जनार्दनस्य च ।**
**अनुदुद्रुवुराशु वर्तनीं**
**कुररीकूजितसूचकस्वनाः ॥ ७७ ॥**

**व्रजतोरिति ।** अथ वल्लवस्त्रियः गोप्यः । व्रजतोः मथुरां प्रति गच्छतोः बलभद्रस्य जनार्दनस्य चेत्युभयोः । वर्तनीं मार्गम् । 'वर्तन्येकपदीति च' इति मार्गपर्यायेष्वमरः । कुररीकूजितसूचकस्वनाः कुररस्य पक्षिविशेषस्य स्त्री कुररी; 'उत्क्रोशकुररौ समौ' इत्यमरः । तस्याः कूजितस्य सूचकः सादृश्यात् स्मारकः विलापस्वरः यासाम् । तथाभूताः सत्यः, आशु अनुदुद्रुवुः अनुधावन्ति स्म ॥ ७७ ॥

**व्यलपन्निति बाष्पगद्गदं**
**विरहारम्भविषादविह्वलाः ।**
**वलयैः प्रियवर्त्मपातिभिः**
**क्षतपुष्पा इव घर्मवीरुधः ॥ ७८ ॥**

**व्यलपन्निति ।** विरहारम्भविषादविह्वलाः विरहोपक्रमखेदेन विक्लवाः । प्रियवर्त्मपातिभिः विरहकार्श्यात् कृष्णस्य मार्गे पतद्भिः । वलयैः, क्षतपुष्पाः छिन्नकुसुमाः । घर्मवीरुधः ग्रीष्मकाललता इव

स्थिताः ताः । बाष्पगद्गदम् अश्रुभिः सन्नकण्ठं यथा तथा । इति वक्ष्यमाणप्रकारेण, व्यलपन् ॥ ७८ ॥

**अपयाति सहाग्रजन्मना**
**सहसा नन्दसुतो विहाय नः ।**
**अनुयाम निवारयाम वा**
**कथमस्माभिरुदास्यते मुधा ॥ ७९ ॥**

**अपयातीति** । नन्दसुतः, अग्रजन्मना बलदेवेन सह । नः अस्मान् । विहाय, सहसा अपयाति इतो गच्छति । अनुयाम वयमपि तमनुगच्छाम । अथ वा गच्छन्तं तं निवारयाम । मुधा व्यर्थमेव । कथमस्माभिरुदास्यते; येन केनचिदुपायेन तद्विरहप्रतीकारे कर्तव्ये औदासीन्यमयुक्तमित्यर्थः ॥ ७९ ॥

**श्रुतिषु ज्वलनं वमत्यसा-**
**वदवीयोरथचक्रचीत्कृतिः ।**
**द्रुतमेत्य पतेम तत्पदे**
**गुरुभर्त्रादिषु मुक्तगौरवाः ॥ ८० ॥**

**श्रुतिष्विति** । असौ, अदवीयसः अनतिदूरस्य रथस्य चक्रचीत्कृतिः रथाङ्गस्य ध्वनिविशेषः । श्रुतिषु श्रवणेषु । ज्वलनं वमति । गुरुभर्त्रादिषु श्वशुरपतिप्रभृतिषु । मुक्तगौरवाः सत्यः । द्रुतमेत्य, तत्पदे तस्य कृष्णस्य चरणे । पतेम अस्मान् विहाय न गन्तव्यमिति प्रार्थनया पतेम । यद्वा तत्पदे तस्य रथचक्रस्य स्थाने तन्मार्गं निरुध्य पतेम ॥

प्रगुणत्वमिव व्रजस्त्रिय-
श्चलसंबन्धिनि नन्दनन्दने ।
मुदिरध्वनितां विजानते
शिखिनस्तद्रथनेमिनिस्वने ॥ ८१ ॥

प्रगुणत्वमिति । चलसंबन्धिनि कुटिलत्वदस्थिरसुहृदि । नन्दनन्दने कृष्णे । व्रजस्त्रियः, प्रगुणत्वम् ऋजुत्वमिव । तद्रथनेमिनिस्वने तस्य नन्दनन्दनस्य रथचक्रनेमिध्वनौ । मुदिरध्वनितां मेघध्वनित्वम् । शिखिनः मयूराः । विजानते ; यथा कुटिले कृष्णे ऋजुत्वेन व्रजस्त्रियः अभ्रमन् तथा तद्रथचक्रध्वनौ मेघध्वनित्वेन मयूराः भ्राम्यन्तीत्यर्थः ॥

अयमुद्धृतगोकुलेक्षणः
कथमक्रूर इति प्रजल्प्यते ।
अथ वा भुवनेषु दारुणाः
प्रथिताः पुण्यजना निशाचराः ॥ ८२ ॥

अयमिति । उद्धृतगोकुलेक्षणः उत्पाटितगोकुलनयनः कृष्णस्य गोकुलान्नयनमेव तदीयनयनोत्पाटनत्वेनाध्यवसितम् । अयं श्वाफल्किः । कथमक्रूर इति प्रजल्प्यते कथ्यते ? क्रूरस्याक्रूर इति नामानुचितमिति भावः । अथ वा चरित्रविपरीतं नामापि दृश्यते इत्याह— दारुणाः भयंकराः । निशाचराः राक्षसाः । भुवनेषु पुण्यजना नाम प्रथिताः । एवमयमप्यक्रूर इति प्रसिद्ध इति भावः ॥ ८२ ॥

बडिशामिषवत्प्रयुक्तया
रिपुरक्रूरसमाख्ययान्वितः ।

विभवं हरति व्रजौकसां
किमिहोच्येत वदेम कस्य वा ॥ ८३ ॥

**बडिशेति ।** बडिशामिषवत् मत्स्यवेधनसूत्रमांसवत् । प्रयुक्तया अक्रूर इति संज्ञया अन्वितः; यथा बडिशामिषलोभादापततां मत्स्यानां विनिपातः एवं सौम्यसंज्ञादर्शनात् एनं प्रति विश्वस्तानां विनिपात इत्यभिप्रायेण बडिशामिषवदित्युक्तम् । "बडिशं मत्स्यबन्धनम्' इत्यमरः । रिपुः शत्रुभूतोऽयं दानपतिः व्रजौकसां विभवं संपदं कृष्णं हरति । इह एवं हरति दानपतौ । किमुच्येत; न हि स्वयं हरन् रिपुः अस्मद्वचनं शृणुयादिति भावः । कस्य वा वदेम अन्यमपि कंचिदस्य नियन्तारं वक्तुं नोपलभामहे इति भावः ॥ ८४ ॥

अवतारवराहरूपिणा
हरिणा भूमिरुदश्चितोदधेः ।
विरहव्यसनोदधेरितः
क इवोदश्चयितुं क्षमेत नः ॥ ८४ ॥

**अवतारेति ।** अवतारात्मको यो वराहः स एव रूपं तद्वता हरिणा । भूमिः प्रलयाम्बुनिधिमग्ना । अम्बुधेः, उदञ्चिता उद्धृता । इतो विरहव्यसनोदधेः अस्मात् विरहदुःखसमुद्रात् । नः अस्मान् क इवोदञ्चयितुं क्षमेत शक्नुयात्; भूमेः प्रलयाम्बुधिनिमज्जनापन्निवारयित्ता नारायण इव अस्माकं विरहव्यसनोदधेरुत्तारयिता न दृश्यत इत्यर्थः ॥

चिरसंघटितोऽपि नः क्षणा-
दनुरागो बलभद्रकृष्णयोः ।

अपयातमहानदीद्वयो
भविता शोण इवैष निष्फलः ॥ ८५ ॥

**चिरेति**। चिरसंघटितः चिरसंपादितोऽपि । नः अस्माकम् । बलभद्रकृष्णयोः बलभद्रे कृष्णे च। स एषोऽनुरागः । अपयातमहानदीद्वयः अपसृतगङ्गायमुनाख्यमहानदीद्वितयः । शोण इव शोणाख्यनदविशेष इव। निष्फलो भविता; तयोर्मधुरायामुत्तमस्त्रीदर्शनादस्मदनादरावश्यंभावादिति भावः । भवितेति लुटि रूपम् । शोणस्य निष्फलत्वं च; 'गङ्गातो निःसृतं तोयं पुनर्गङ्गां न याति चेत् । अपेयं तद्विजानीयात्पीत्वा चान्द्रायणं चरेत्' इति निषेधादभोग्यत्वरूपम् ॥ ८५ ॥

अविकल्पितबाल्ययौवनः
प्रणयोऽस्मासु बलानुजन्मनः ।
विधिना विषमप्रवाहिणा
सिकतासेतुरिवैष भिद्यते ॥ ८६ ॥

**अविकल्पितेति** । अविकल्पितबाल्ययौवनः बाल्ये यौवने च उभयत्राप्यविशिष्ट इत्यर्थः । बलानुजन्मनः कृष्णस्य । अस्मासु एष प्रणयः, विषमप्रवाहिणा विषमं प्रवोढुं शीलवता । विधिना दैवेन तां मथुरां प्रापयता । आशु सिकतासेतुरिव भिद्यते विघट्यते ॥ ८६ ॥

अमुना शशिनेव कल्पित-
श्चिरमस्मासु शरन्नदीष्विव ।
प्रणयः प्रतिभासजीवितः
प्रतिमाचन्द्र इव प्रलीयते ॥ ८७ ॥

**अमुनेति** । अमुना कृष्णेन । शशिनेव, चिरमस्मासु शरन्निम्नगासु नदीष्विव । कल्पितः आहितः । प्रतिभासजीवितः प्रतिभासे अस्मद्दर्शने अनुवर्तमानः । प्रणयः, प्रतिमाचन्द्र इव प्रलीयते नश्यतीत्यर्थः । यथा प्रतिभासे सत्येव वर्तमानः प्रतिबिम्बचन्द्रः प्रतिभासविलये विलीयते एवं मथुरां गच्छतः तस्य अस्मद्दर्शनविलयने स्नेहोऽपि विलीयत इत्यर्थः ॥ ८७ ॥

अहमस्मि तव त्वमेव वा
मम दृष्टिस्त्वमिति प्रलोभयन् ।
विजहाति स एव बल्लवी-
रलमेतावदतः परेण किम् ॥ ८८ ॥

**अहमिति** । अहं तव अहं त्वदीयोऽस्मि । त्वमेव वा अहम्, त्वमेव वा अस्मि । अहं त्वमिति भेदो नास्तीत्यर्थः । मम दृष्टिस्त्वम्, इति एवमुक्तिप्रकारैः । प्रलोभयन्, स एव कृष्णः; य एवं वदति स एवेत्येवकाराभिप्रायः। प्रलोभयन्निति वृर्तमानसामीप्ये वर्तमानप्रयोगः । बल्लवीः, विजहाति त्यजति । एतावदलम् एतावतैव शाठ्यं पर्याप्तम् । अतः परेण किम्? एतावतैव निर्विण्णानामितोऽधिकं शाठ्यं पिष्टपेषणमित्यर्थः ॥

अयमेवमशुल्कदासिकाः
स्वपदोपघ्नलताः स्वयं प्रभुः ।
बहुमत्य जहाति निःस्पृहः
कथमालेख्यगता इवाद्य नः ॥ ८९ ॥

**अयमिति** । अयं कृष्णः । अशुल्कदासिकाः शुल्कनिरपेक्षा दासीः;

'अभूषितः कान्तः' इतिवत् नैरपेक्ष्ये नञ्समासः । स्वस्य पदं शरणम् उपन्नः आश्रयः यासां तथा भूता लताः; उपघ्नवृक्षविश्लेषे लतावत् तद्विरहे स्थातुमशक्ता इति यावत्। नः अस्मान्। स्वयं विहाय स्थातुं शक्तोऽपि बहुमत्य एतावन्तं कालं बहुमान्य। अद्य इदानीम् । निःस्पृहः कथम् आलेख्यगताः चित्रार्पिता वनिता इव एवं जहाति; यथा चित्रलिखिता रूपादिना श्लाघित्वापि अस्पृष्ट्वैव त्यजन्ति, तथा कथमेवं त्यजतीत्यर्थः ॥ ८९ ॥

निरपेक्ष इवैष नीलया
रसिकः पालिकया सराधया ।
पृथगत्र किमेतदुच्यते
कुहकः कश्चिदसौ कुलस्य नः ॥ ९० ॥

**निरपेक्ष इति**। अरसिकः नीरसहृदयः। एष कृष्णः। नीलया, सराधया राधया सहितया। पालिकया च, निरपेक्ष इव अपेक्ष्यत इत्यपेक्षः। कर्मण्यप्रत्ययः। अपेक्षणीयकृत्यरहित एवेत्यर्थः। इवकारोऽवधारणे। नीलादयो गोपिकाविशेषाः । अत्र गोपिकासु । पृथक् नीलादिकाः प्रत्येकमुदाहृत्य । किमेतदुच्यते? असौ कृष्णः । नः अस्माकम् । कुलस्यैव कश्चित् कुहको वञ्चकः ॥ ९० ॥

अमृतस्य विषस्य च स्वयं
प्रभवस्थानमभूत्पयोनिधिः ।
नियतं तदनेन दर्शितं
निजसंयोगवियोगदायिना ॥ ९१ ॥

**अमृतस्येति** । पयोनिधिः अमृतस्य विषस्य च स्वयं प्रभवस्थानमभूत् । तत् एकस्य विरुद्धद्वयोत्पत्तिस्थानत्वम् । निजसंयोगवियोगदायिना अमृतगरलतुल्यात्मसंयोगवियोगदायिना । अनेन, नियतं निश्चितं यथा तथा । दर्शितम् । 'नियतं निश्चिते ऋते' इति हलायुधः । एकस्य विरुद्धोभयजनकत्वे असंभावना निवर्तितेत्यर्थः ॥ ९१ ॥

मुखचन्द्रिकया मुखानि नः
कुमुदानीव विकासमानयन् ।
कितवो यदुवाच सत्यव-
त्क गतं तत्क च तेन गम्यते ॥ ९२ ॥

**मुखेति** । मुखचन्द्रिकया मुखप्रभया । नः मुखानि कुमुदानीव विकासमानयन् प्रापयन् । कितवो धूर्तः कृष्णः । यत् 'क्षणमपि युष्मद्वियोगं न सहे' इत्यादिकं सत्यवदुवाच, तत् वचनं क गतम्? तेन च क गम्यते? ॥ ९२ ॥

यमुनापुलिनेषु दीव्यता
यदुतानेन वशीकृता वयम् ।
विफलप्रणयप्रदायिना
विधिना हन्त विलोभितास्ततः ॥ ९३ ॥

**यमुनेति** । यमुनायाः पुलिनेषु । दीव्यता क्रीडता । अनेन कृष्णेन वयं वशीकृताः । यदित्यर्थे । यदुतेति निपातसमाहारः । ततः तस्मात् विफलप्रणयप्रदायिना निष्फलानुरागप्रदेन । विधिना, विलोभिताः वञ्चिताः स्मः ॥ ९३ ॥

विजहाति स एष गोकुलं
मधुरामाद्रियते मनोरमाम् ।
भवितव्यतया शुभाशुभे
तदिहैवं परिवर्तितास्पदे ॥ ९४ ॥

**विजहातीति** । स एष कृष्णः; य एवास्मास्वनुरज्य स्थितवानिति भावः । गोकुलं विजहाति । मनोरमां मथुरामाद्रियते; मनोरमामित्यनेन मथुरां प्राप्तस्य गोकुलप्रत्यवेक्षणं न संभाव्यत इति द्योत्यते । तत् तस्मात् । इह गोकुलमथुरयोः । शुभाशुभे, भवितव्यतया कर्मणां विपाकेन । एवं परिवर्तितास्पदे व्यत्यस्तास्पदे जाते ॥ ९४ ॥

सहजं हरता महानिधिं
विवशानामिव वैरिणेव नः ।
विहितः सुकृतेन कीदृशा
मथुरायोषिदनुग्रहो महान् ॥ ९५ ॥

**सहजमिति** । विवशानां बन्धनादिना परवशानामिव । नः अस्माकम् । सहजं स्वतः सिद्धम् । महान्तं निधिं कृष्णम् । वैरिणेव हरता शत्रुवदपहरता । कीदृशा कथंभूतेन । सुकृतेन महान् मथुरायोषितामनुग्रहो विहितः ॥ ९५ ॥

सहपांसुविहारसंभृतं
जहता स्नेहमनङ्गवर्धितम् ।
अपि नागरयौवतं क्षणा-
दमुना हन्त विलोभयिष्यते ॥ ९६ ॥

**स्नेहेति** । सहपांसुविहारसंभृतं शैशवे सहपांसुक्रीडया संपादितम् । अनङ्गवर्धितं यौवने मदनेनोपचितम् । स्नेहं जहता अमुना, नागरं नगरसंबन्धि यौवतं युवतिसमूहोऽपि । विलोभयिष्यते; तत्रापि विलोभनमात्रमेव । स्वयं न रज्येदिति भावः । अत एव तासामप्येवं दुःखं जनयिष्यतीति विषादे हन्तशब्दः ॥ ९६ ॥

नटवत्परिगृह्य मायया
नतचिन्तामणिरेष नस्त्यजन् ।
अनुरूपतमास्वपि ध्रुवं
नगरस्त्रीषु न सङ्गमेष्यति ॥ ९७ ॥

**नटवदिति** । नतचिन्तामणिः प्रणतानां चिन्तामणिरिव अभिमतप्रदः । नः अस्मान्, मायया वञ्चनया । नटवत् परिगृह्य नटो यथा निरपेक्ष एव नाट्येऽनुरक्तवत् वनितापरिग्रहमभिनयति तद्वत् परिगृह्य । त्यजन् एष कृष्णः । अनुरूपतमासु अतिशयेन स्वरूपानुरूपासु । नगरस्त्रीष्वपि न सङ्गमेष्यति । ध्रुवमिति संभावनायाम् । मायिकः सर्वत्रापि मायिक एवेति भावः ॥ ९७ ॥

निजवंशनिनादतोऽपि य-
त्स्वदते श्रोत्ररसायनं वचः ।
निदधीत नृशंसधीरसौ
पुरयोषित्स्वपि वागुरामिमाम् ॥ ९८ ॥

**निजेति** । श्रोत्ररसायनं श्रोत्राणां रसायनमिव आप्यायनम् । यत् वचः, निजवंशनिनादतोऽपि स्ववेणुनादादपि । स्वदते रोचते ।

इमाम् एतद्वचोरूपां वागुरां मृगबन्धनीम् । नृशंसधीः क्रूरधीः । असौ सुरयोषित्स्वपि निदधीत; संभावनायां लिङ् ॥ ९८ ॥

इह तावदुपेक्षिता वयं
वशिनालेख्यपराङ्गना इव ।
विहरन्विरसेन चेतसा
कितवस्तत्र किमाचरिष्यति ॥ ९९ ॥

**इहेति** । इह गोकुले । वयं तावत्; तावच्छब्दः क्रमार्थः । वशिना जितेन्द्रियेण तेन । आलेख्यपराङ्गना इव निर्विकारमुपेक्षिताः । तत्र मथुरायाम् । विरसेन रसशून्येन । चेतसा विहरन्, कितवः धूर्तः । किमाचरिष्यति? तत्राप्येवं पुरस्त्रियो वशीकृत्य त्यजन् तासामपि व्यथामेव संपादयेदिति भावः ॥ ९९ ॥

युवतीरयमिन्दुकान्तये-
न्नगरे नन्दकुमारचन्द्रमाः ।
स्मितचन्द्रिकया यदीयया
द्रवतामेति मनःशिलापि नः ॥ १०० ॥

**युवतीरिति** । अयं नन्दकुमार एव चन्द्रमाः । नगरे युवतीः इन्दुकान्तयेत् इन्दुकान्तवत् द्रावयेदित्यर्थः । यदीयया स्मितचन्द्रिकया नः अस्माकं तिर्यक्कल्पानां मूढानाम् । मन एव शिला सापि द्रवतामेति । मनःशिलेति गैरिकमपि प्रतीयते । ततश्च प्रसिद्धचन्द्रिकया द्रावयितुमशक्यमपि द्रावयतीति व्यतिरेको व्यज्यते ॥ १०० ॥

अपि जह्युरमुष्य दर्शने
नवलुब्धा नगरस्त्रियः प्रियान्।
सुलभे सुमणौ कथं मतिः
क्रमते काचन काचसंग्रहे ॥ १०१ ॥

**अपीति**। अमुष्य दर्शने सति। नवलुब्धाः सुन्दरप्रियाः नगरस्त्रियोऽपि। प्रियान् स्वभर्तॄन्। जह्युः त्यजेयुः; यथाप्रियेति भावः। तथा हि-सुमणौ उत्तमरत्ने। सुलभे सति, काचस्य भूविकारविशेषस्य संग्रहे। काचन मतिः या काचिदपि बुद्धिः। कथं क्रमते? ॥ १०१ ॥

ललिताद्भुतलास्यगन्धिषु
ध्रुवमङ्गेषु बलानुजन्मनः।
नवयौवनरामणीयकं
नयनैः पास्यति नागरीजनः ॥ १०२ ॥

**ललितेति**। ललितस्य सुन्दरस्य अद्भुतलास्यस्य आश्चर्यनृत्तस्य गन्धो लेशः वासना वा तद्वत्सु। स्वाभाविको विभ्रम एव तादृग्लास्यगन्धत्वेनाध्यवसीयते। बलानुजन्मनः कृष्णस्य। अङ्गेषु, नवयौवनेन यत् रामणीयकं सौन्दर्यम्। नागरीजनः नगरस्त्रीजनः ध्रुवं नयनैः पास्यति; अहो! तस्य धन्यतेति भावः। जन इति जातावेकवचनम् ॥

विधिना विषमप्रवृत्तिना
व्यपनीतोऽपि कदाचिदागतः।
अपि नः पुनरार्द्रयिष्यते
मदनप्राणसुहृद्भिरीक्षितैः ॥ १०३ ॥

**विधिनेति।** विषमप्रवृत्तिना कुटिलव्यापारेण। विधिना दैवेन। व्यपनीतः अपसारितोऽपि कृष्णः। कदाचिदागतः सन्। नः अस्मान्। मदनस्य प्राणसुहृद्भिः प्राणसदृशैः। ईक्षितैः ईक्षणैः। पुनरार्द्रयिष्यते अपि, पुनरार्द्रीकरिष्यति किम्? ॥ १०३ ॥

इह तत्पदकाङ्क्षिभिः स्तनै-
र्नयनैस्तन्मुखपद्मषट्पदैः।
श्रवणैश्च तदुक्तिजीवितै-
रपि जीवेम पुनस्तदादृताः ॥ १०४ ॥

**इहेति।** तत्पदकाङ्क्षिभिः तच्चरणविन्यासाभिलाषुभिः। स्तनैः, तन्मुखपद्मषट्पदैः पद्मे षट्पदवत् तन्मुखे लोलैः। नयनैः, तदुक्तिरेव जीवितं येषां तैः। श्रवणैः श्रोत्रैश्च सह। इह प्राग्विहारदेशे। पुनस्तदादृताः पुनरपि तेनादृताः सत्यः। अपि जीवेम जीवेम किम्? ॥ १०४ ॥

करुणाभरितैः कदा पुनः
स्वयमुल्लाघयिता स एव नः।
अपरस्परपातिभिः शनै-
रगदंकारनिभैरवेक्षणैः ॥ १०५ ॥

**करुणेति।** स एव कृष्णः। करुणया भरितैः संजातकरुणाभरैः कृपापूर्णैः। अपरस्परपातिभिः अपरस्परमविच्छिन्नक्रियासंतानं यथा तथा पतनशीलैः। 'अपरस्पराः क्रियासातत्ये' इति निपातः। अगदंकारनिभैः भिषक्सदृशैः। 'कारे सत्यागदस्य' इति मुमागमः। शनैः मन्दम् अवेक्षणैः मुग्धमन्थरैरवलोकनैः। स्वयमेव पुनः कदा नः

उल्लाघयिता विरहव्यथानिर्गताः कर्ता । 'उल्लाघो निर्गतो गदात्' इत्यमरः । उल्लाघशब्दात् तत्करोतीति ण्यन्ताल्लृट् ॥ १०५ ॥

विविधारुणराजिरञ्जिते
विशदस्मेरविशालशीतले ।
किमपि ब्रुवती कृतार्थतां
नयने तस्य कदानुनेष्यतः ॥ १०६ ॥

**विविधेति** । विविधाभिररुणराजिभिः रञ्जिते । विशदे शुभ्रे स्मेरे हर्षविकासिते चेति विशेषणानामपि विशेषणविशेष्यभावविवक्षया समासः । कृतार्थतां किमपि ब्रुवती किंचित् सूचयन्ती चापलरहिते; धीरोद्धतगतिनी इति यावत् । तस्य नयने कदानुनेष्यतः; अस्मान् प्रणयकुपिता इति शेषः ॥ १०६ ॥

बधिरत्वमिवागतान्यसौ
श्रवणान्यद्य पुनः समेत्य नः ।
रमयिष्यति चाटुभिः कदा
रतिसिन्धोरिव वीचिपङ्क्तिभिः ॥ १०७ ॥

**बधिरत्वमिति** । असौ कृष्णः । अद्य इदानीम् । बधिरत्वमागतानि विरहव्यथया उपघातं प्राप्तानीव स्थितानि नः अस्माकम् । श्रवणानि कर्णाणि । कदा पुनः समेत्य । रतिसिन्धोः वीचिपङ्क्तिभिरिव स्थितैः चाटुभिः प्रियवचनैः । रमयिष्यति ॥ १०७ ॥

मदयन्हृदयानि विभ्रमै-
रपि संवादमिवाचरन्दृशा ।

अविभागमिवावहन्गुणै-

रपि नः प्रत्यवपत्स्यते पुनः ॥ १०८ ॥

**मदयन्निति ।** विभ्रमैः शृङ्गारचेष्टाभिः हृदयानि, मदयन् मत्तानि कुर्वन् । दशा दृष्ट्या । अविसंवादमिवाचरन् ऐकमत्यमिव तन्वन् । गुणैः दाक्षिण्यादिभिः । अविभागमिव आवहन् ऐक्यमिव संपादयन् । कृष्णः, नः अस्मान् । पुनः प्रत्यवपत्स्यते अपि, पुनरपि प्रत्यागत्य प्राप्स्यति किम् ? ॥ १०८ ॥

परिवर्तयिता जगत्त्रयी-

मपरावृत्तिरनेहसः क्रमः ।

यदतीतमतीतमेव त-

त्पुनरेष्यत्यपि पुष्करेक्षणः ॥ १०९ ॥

**परिवर्तयित्तेति ।** जगत्त्रयीं परिवर्तयिता परिवर्तयितुं शीलमस्येति तथोक्तः । ताच्छील्ये तृन्प्रत्ययः । अनेहसः कालस्य क्रमः अपरावृत्तिः परावृत्तिरहितः, ततो यदतीतं तत् अतीतमेव न तत्रानुशयः कार्यः । पुष्करेक्षणः कमललोचनः कृष्णः । पुनरेष्यत्यपि, कचित्कदाचित् पुनरागमिष्यति चेत् तावतैवालम्, गतः कालो गच्छत्वित्यर्थः ॥ १०९ ॥

तावदपि न संभावितमिति पक्षान्तरमुत्प्रेक्ष्यते—

अथवा पुरसुन्दरीजनैः

सुभगंभावुकसौम्यवृत्तिभिः ।

अवशादवरुद्धचेतसः

कृतिनः कैव कथा व्रजागमे ॥ ११० ॥

**अथवेति** । अथ वा सुभगंभावुकसौम्यवृत्तिभिः असुभगाः सुभगाः चक्षुष्याः भवन्तीति सुभगंभावुकाः 'कर्तरि भुवः खिष्णुच्खुकञौ' इति खुकञ्प्रत्यये मुमागमश्च । सुभगंभावुकाः कृष्णदर्शने अधिकविभ्रमोदयात् अतिशयितं सौभाग्यं चक्षुष्यत्वं प्राप्ताः; सौम्याः स्वतो मनोज्ञाश्च वृत्तयः चरित्राणि येषां तैः । पुरसुन्दरीजनैः मथुराङ्गनाजनैः। अवशात् अनायासात् तथा अवरुद्धचेतसः निरुद्धहृदयस्य । कृतिनः तावद्वा कृतकृत्यस्य । व्रजागमे कैव कथा; तत्र उत्तमस्त्रीलाभात् अस्मानुद्दिश्य व्रजागमनं न संभाव्यत एवेत्यर्थः ॥ ११० ॥

उक्तमेवार्थं प्रपञ्चयति—

मथुरापुरमत्तकाशिनी-
मधुरालापविलोभिताशयः ।
पुनरेष्यति नन्दनन्दनः
किमिवास्मासु विचिन्त्य कारणम् ॥ १११ ॥

**मथुरेति** । मथुरापुरस्य मत्तकाशिनीनाम् उत्तमस्त्रीणां मधुरैः मनोहरैः आलापैः विलोभिताशयः आसञ्जितहृदयः । नन्दनन्दनः अस्मासु किमिव कारणं विचिन्त्य पुनरेष्यति; न हि तादृग्रूपं वशीकरणसामर्थ्यं वा किंचिदस्मासु विद्यते इति भावः। एष्यतीति भौवादिकस्य 'इ गतौ' इति धातोः आङ्पूर्वस्य रूपम् । 'इण् गतौ' इत्यस्य ग्रहणे तस्य आङ्पूर्वत्वे 'एत्येधत्यूठ्सु' इति वृद्धिप्रसङ्गात्। तदभावे आगमनार्थालाभात्। 'इ गतौ' इति धातौ तु 'एङि पररूपम्' इति पररूपेण सिध्यति ॥

बहुविभ्रमपाशबन्धुरां
गुणगृह्यः स्वयमेष दुस्तराम् ।

अतिलङ्घयितुं न शक्नुया-
न्नगरस्त्रीजननेत्रवागुराम् ॥ ११२ ॥

**बहुविभ्रमेति** । स्वयं गुणगृह्यः स्वतो गुणपक्षपाती 'पदास्वैरिबाह्यापक्ष्येषु च' इति प्रहेः पक्ष्यार्थे क्यप् प्रत्ययः । एष कृष्णः । बहुविभ्रमैर्विलासैरेव पाशैः बन्धुरां विषमाम् 'बन्धुरं तून्नतानतम्' इत्यमरः । अत एव दुस्तराम् । नगरस्त्रीजनानां नेत्राण्येव वागुरां मृगबन्धनीम् । अतिलङ्घयितुं न शक्नुयात् ॥ ११२ ॥

न रथः परिदृश्यते महा-
न्न च नेमिस्तनितं निशम्यते ।
न च रेणुरितो विजृम्भते
तदपि भ्रश्यति जीवितं न नः ॥ ११३ ॥

**न रथ इति** । महानपि रथो न परिदृश्यते । नेमिस्तनितं नेमिशब्दश्च न निशम्यते न श्रूयते । स्तनितशब्दो मेघगर्जितवाची नेमिध्वनावुपचरितः । इतः रेणुः रथोत्थापितः पांसुश्च न विजृम्भते । तदपि तथापि एवमतिदूरं गतेऽपि कृष्णे । नः अस्माकम् । जीवितं न भ्रश्यति । अहो कठिनहृदयतास्माकमित्यात्मोपालम्भः ॥ ११३ ॥

इति वादिनि वल्लवीजने
यमुनां सत्वरसूतचोदितः ।
घटयन्वसुधामनोरथं
वशिनस्तस्य रथः क्षणाद्ययौ ॥ ११४ ॥

**इतीति** । वल्लभीजने इति इत्थं वादिनि सति । सत्वरेण सूतेन सारथिना चोदितः प्रेरितः । वसुधाया मनोरथविषयं कंसवधादिकं घटयन्, वशिनः जितेन्द्रियस्य कृष्णस्य । रथः क्षणात् यमुनां ययौ ॥

ननु किमित्येवं भगवता परमकृपालुना अनन्यपराणां गोपिकानां विरहव्यथा संपादिता? तत्राह—

**स्वगुणानुभवेन सुभ्रुवां**
**भवभोगोचितपुण्यसंचयम् ।**
**विरहव्यथया तु तीव्रया**
**वृजिनाम्भोधिमशोषयत्प्रभुः ॥ ११५ ॥**

**स्वगुणेति** । प्रभुः कृष्णः । सुभ्रुवां गोपिकानाम् । भवभोगोचितपुण्यसंचयं सांसारिकभोगानुरूपसुकृतनिकरम् । स्वगुणानुभवेन अशोषयत्; यत् यावत्तासामनादिभवसंचितं सुकृतं तत् सर्वम् एतावत्पर्यन्तभगवद्गुणानुभवेनैव दत्तफलमासीदिति भावः । तीव्रया उत्कटया । विरहव्यथया तु तासां वृजिनाम्भोधिं पापसागरम् । अशोषयत्; ततश्च मोचयितुकामेन भगवता तासां पापोपरमार्थं विरहव्यथा संपादितेति भावः ॥ ११५ ॥

**परवन्ति जगन्ति बाधितुं**
**नियतिः किं न करोति निष्ठुरा ।**
**विजहौ करुणानिधिः प्रिया**
**विरहे तस्य च ताभिरास्यत ॥ ११६ ॥**

**परवन्तीति** । निष्ठुरा कर्कशा । नियतिः दैवम् । परवन्ति पराधी-

नानि जगन्ति बाधितुं किं न करोति; जगद्बाधोपयुक्तं यत् तत् सर्वमपि संघटयत्येवेति भावः । तदेतस्य सामान्यस्य समर्थनीयं विशेषमाह—विजहाविति । स्वयं करुणानिधिः कृपानिधिः कृष्णः । प्रियाः प्रेयसीः । विजहौ, ताभिश्च तस्य विरहे आस्यत अस्थीयत, अजीव्यतेति यावत् । तदेतदुभयमसंभावितमेव, किं तु तासां विरहदुःखं संपादयितुमिच्छता दैवेनैव संघटितमित्यर्थः ॥ ११६ ॥

विनिवेश्य रथे सितासितौ
वसुदेवस्य सुतौ स यादवः ।
मणिभङ्गरुचं महापगां
दिवमुष्णांशुरिव व्यगाहत ॥ ११७ ॥

**विनिवेश्येति** । स यादवः अक्रूरः । सितासितौ वसुदेवस्य सुतौ रामकृष्णौ । रथे विनिवेश्य, मणिभङ्गरुचम् इन्द्रनीलशकलप्रभाम् । महापगां महानदीं यमुनाम् । दिवम् अभ्रम् । उष्णांशुरिव व्यगाहत स्नातुं प्रविष्टः ॥ ११७ ॥

अघमर्षणलीनकिल्बिषः
सलिले मग्नतनुर्ददर्श तौ ।
भुजगेन्द्रभुजङ्गशायिनौ
पुरुषौ किंचिदिवान्यलक्षणौ ॥ ११८ ॥

**अघमर्षणेति** । अघमर्षणलीनकिल्बिषः निमज्ज्य जप्यव्येनाघमर्षणसूक्तेन नष्टपापः सलिलेन मग्नतनुः सः । तौ रामकृष्णौ । भुजगेन्द्रभुजङ्गशायिनौ शेषशेषशायिरूपौ । किंचिदिव अल्पम् । अन्यलक्षणौ पूर्वरूपविसदृशरूपौ पुरुषौ ददर्श ॥ ११८ ॥

उपसृत्य च तीरमादरा-
त्तदवस्थौ निरवर्णयद्रथे ।
स्मयमानदृशोस्तयोरसौ
निभृतः स्वानुभवं न्यवीवदत् ॥ ११९ ॥

उपसृत्येति । आदरेण तीरमुपसृत्य च रथे तदवस्थौ यदवस्थौ रथे निवेशितौ तदवस्थावेव । निरवर्णयत् अपश्यत् 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः । अथ स्मयमानदृशोः असावागत्य किं वक्ष्यतीति स्मेरदृशोः । तयोः रामकृष्णयोः । निभृतः विनीतः असौ । स्वानुभवं तयोरन्तर्जले दर्शनरूपम् । न्यवीवदत् निवेदयति स्म ॥

प्रणिधानबहिर्विलोचनैः
प्रतिलब्धानुभवः प्रसादयन् ।
अनिनीषत तावुभौ तदा
पुरमारब्धशरासनोत्सवाम् ॥ १२० ॥

प्रणिधानेति । प्रणिधानबहिर्विलोचनैः प्रणिधानेन ध्यानेन अन्तर्विलोचनरूपेण बहिर्विलोचनरूपाभ्यां गोलाभ्यां च । प्रतिलब्धानुभवः प्राप्ततदुभयसाक्षात्कारः । प्रसादयन् ततः स्तुतिप्रणामादिभिः तौ प्रसन्नौ कुर्वन् सः । तदा आरब्धशरासनोत्सवाम् उपक्रान्तधनुर्महाम् पुरं मथुराम्, पूःशब्दो रेफान्तः । उभौ रामकृष्णौ अनिनीषत नेतुमैच्छत् 'अकथितं च' इति नियः द्विकर्मकता ॥ १२० ॥

गजसिंहगती ततश्च तौ
गिरितुङ्गेन रथेन तेरतुः ।

गगनद्रवसंनिभां नदी-
मपुनःप्राप्तिभयादिवाकुलाम् ॥ १२१ ॥

**गजेति ।** ततश्च गजयोः सिंहयोश्च गतिवत् गतिः ययोस्तौ रामकृष्णौ । गिरितुङ्गेन पर्वतवदुन्नतेन रथेन गगनद्रवसंनिभां नैल्यनैर्मल्यादिना द्रवीभूतगगनतुल्याम् । अपुनःप्राप्तिभयादिव तयोः पुनरागमनं न भविष्यतीति भयादिव आकुलां त्रस्तां रथक्षोभाद्व्यलितां नदीं यमुनां तेरतुः ॥ १२१ ॥

अथ वियति समेतैः सिद्धगन्धर्वमुख्यै-
र्भुवि च भुवनगोपः संस्तुतो गोपवृद्धैः ।
ललितगतिविहारो रामचन्द्रेण सार्धं
रणपरिणतिकाङ्क्षी राजधानीं जगाहे ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु यादवाभ्युदये
नवमः सर्गः ॥

**अथेति ।** अथ यमुनातरणानन्तरम् । वियति समेतैः कंसवधे प्रोत्साहनाय गगने मिलितैः । सिद्धगन्धर्वमुख्यैः सिद्धगन्धर्वचारणप्रभृतिभिः । भुवि गोपवृद्धैः नन्दोपनन्दप्रभृतिभिश्च संस्तुतः सम्यक् स्तुतः । ललितगतिविहारः मनोज्ञगमनविलासः । भुवनगोपः जगत्पालकः कृष्णः । रणपरिणतिकाङ्क्षी रणस्य परिणतिः परिणामः उत्कर्षः तां काङ्क्षमाणः सन् । रामचन्द्रेण रामो बलदेवः चन्द्र इव तेन सार्धम् । राज-

-थानीं मथुरां जगाहे गाहते स्म, प्रविष्ट इत्यर्थः । मालिनीवृत्तम्, 'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ॥ १२२ ॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीविश्वजिद्याजि-

श्रीरङ्गराजाध्वरिवरसूनुना अप्पय्यदीक्षितेन कृते

यादवाभ्युदयव्याख्याने

नवमः सर्गः ॥



# दशमः सर्गः ॥



ततस्तौ ददृशुस्तत्र विशन्तौ राजवीथिकाम् ।
पूर्णदृष्टिफलाः पौराः पुण्यैरेकमुखैरिव ॥ १ ॥

**तत इति** । ततः अनन्तरम् । तत्र पौराः मधुरापुरे भवाः प्राणिनः । राजवीथिकां विशन्तौ तौ रामकृष्णौ । एकमुखैः एकत्र फले तद्दर्शनसंपादनरूपे मुखम् आभिमुख्यं येषां तैः । पुण्यैः अखिलैः स्वीयैः सुकृतैरिव । पूर्णदृष्टिफलाः परिपूर्णचक्षुष्मत्ताफलाः सन्तः । ददृशुः ॥

चक्षुषामिव भाग्येन संप्रवृत्तौ महोत्सवौ ।
युक्तौ मदनशक्त्येव युगपन्मधुमाधवौ ॥ २ ॥

**चक्षुषामिति** । चक्षुषां पौरनेत्राणां भाग्येन संप्रवृत्तौ महोत्सवाविव स्थितौ । मदनस्य जगन्मोहिन्या शक्त्या युक्तौ । युगपत्प्रवृत्तौ मधुमाधवौ वासन्तिकौ मासाविव च स्थितौ तौ ददृशुः इति पूर्वेणान्वयः ॥ २ ॥

अभिख्यावीचिविक्षेपैरपृथग्भावचित्रितैः ।
समेतैरनुभावाद्यैः सक्ताविव रसोत्तमौ ॥ ३ ॥

**अभिख्येति** । अपृथग्भावचित्रितैः परस्परसंमेलनेन कर्बुरितैः । अभिख्यावीचिविक्षेपैः शोभातरङ्गप्रसारणैः उपलक्षितौ । अत एव समेतैः मिलितैः । अनुभावाद्यैः कार्यकारणसहकारिरूपैः अनुभावविभावसंचा-

रिभिरुपलक्षितौ । शक्तौ मनोविस्ताररूपैकावस्थाप्रभवत्वेन परस्परमिलितौ । रसोत्तमौ वीराद्भुताविव स्थितौ । यद्यपि 'शृङ्गारवीरकरुणाद्भुतहास्यरौद्रबीभत्सवत्सलभयानकशान्तनाम्नः । आम्नासिषुर्दश रसान् सुधियो वयं तु शृङ्गारमेव रसनाद्रसमामनामः' इत्यादिषु शृङ्गाररसस्य उत्तमत्वं प्रसिद्धम्, तथापि तस्य मित्रमुत्तमरसो नास्ति, हास्यस्यैव तन्मित्रत्वात् । अतः परस्परमित्रे उत्तमरसौ च वीराद्भुतावेवेति तथा व्याख्यातम् । विभावानुभावसंचारिणां लक्षणानि प्रथमसर्ग एव लिखितानि । तत्र वीररसस्य प्रतिमल्लविलोकनम् ॥ ३ ॥

**क्रममुल्लङ्घ्य भूतानां भोगमोक्षाविवोद्गतौ ।**
**तयोरेव विनिष्पत्त्यै धर्माविव च तादृशौ ॥ ४ ॥**

**क्रममिति** । क्रममुल्लङ्घ्य शास्त्रसिद्धान्तपद्धतिमतिक्रम्य । उद्गतौ युगपदाविर्भूतौ । भूतानां प्राणिनाम् । भोगमोक्षाविव स्थितौ स्वर्गादिभोगापवर्गाविव स्थितौ । तयोरेव स्वर्गापवर्गयोरेव । विनिष्पत्त्यै सम्यक् सिद्ध्यै । तादृशौ युगपदुत्थितौ धर्माविव च स्थितौ प्रवृत्तिधर्मनिवृत्तिधर्माविव च स्थिताविल्यर्थः ॥ ४ ॥

**पुनन्तौ भुवनं पादैः पुष्पवन्ताविवापरौ ।**
**सिञ्चन्तौ कान्तिवर्षेण सितकृष्णाविवाम्बुदौ ॥ ५ ॥**

**पुनन्ताविति** । पादैः चरणैः, किरणैरित्यपि प्रतीयते । भुवनं पुरभूमिम्, लोकम् । पुनन्तौ पवित्रयन्तौ । अत एव अपरौ प्रसिद्धभिन्नौ । पुष्पवन्तौ चन्द्रसूर्याविव स्थितौ अकारान्तोऽयं शब्दः 'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ' इत्यमरः । 'रविशशिनौ पुष्पवन्ताख्यौ' इति नाममालायां पाठात् । 'प्राक्प्रत्यग्धरणीधरशिखरस्थित-

पुष्पवन्ताभ्याम्' इति प्रयोगाच्च । केचित्तु पुष्पं विकासः प्रकाशः अनयोरस्तीति मतुबन्तमाहुः । तथापि प्रयोगो दृश्यते— 'कमोदिताभ्यामिव पुष्पवद्भ्याम्' इत्यादिः । कान्तिवर्षेण द्युतिवृष्टया सिञ्चन्तौ सितकृष्णौ अम्बुदौ मेघाविव च स्थितौ ॥ ५ ॥

**मदोपक्रमदुर्दान्तौ मधुरोद्धतविभ्रमौ**
**कलभाविव संनद्धौ कंसादिनलमर्दने ॥ ६ ॥**

**मदेति** । मदोपक्रमदुर्दान्तौ शत्रुसंनिकर्षान्मदारम्भेण दृप्तौ । मधुरोद्धतविभ्रमौ मनोहरोद्धतविभ्रमौ मनोहरोद्भटविहारौ । कंसादय एव नला दमनाः तृणविशेषाः तेषां मर्दने । संनद्धौ, कलभौ गजपोताविव स्थितौ ॥ ६ ॥

**शुभानामिव सीमन्तैः श्रुतिसीमन्तसेवितैः ।**
**पुनन्तौ राजविशिखां पुण्यैश्चरणपङ्कजैः ॥ ७ ॥**

**शुभानामिति** । शुभानां श्रेयसाम् । सीमन्तैः उत्कर्षावधिभिरिव स्थितैः; सीमन्तशब्देन केशपद्धतिवाचिना उत्कार्षो लक्ष्यते । निरतिशयश्रेयोहेतुत्वात् तथोत्प्रेक्षा । श्रुतिसीमन्तसेवितैः उपनिषन्निषेवितैः; तत्प्रतिपाद्यैरिति यावत् । पुण्यैः पवित्रैः । चरणपङ्कजैः, राजविशिखां राजवीथीम् । पुनन्तौ पवित्रयन्तौ ॥ ७ ॥

**शीलसंवृतपारम्यैः शृङ्गारपरिकर्मितैः**
**दृषदोऽपि द्रवीभावं नयन्तौ दिव्यचेष्टितैः ॥ ८ ॥**

**शीलेति** । शीलेन सद्वृत्तेन लोकमर्यादानतिक्रमेण संवृतम् आच्छादितं पारम्यं परमत्वं परब्रह्मभावः यैस्तैः । शृङ्गारेण परिकर्मितैः संजा-

तपरिष्कारैः । तारकादित्वादितच् प्रत्ययः । दिव्यचेष्टितैः दिव्यैः मनोज्ञैः चेष्टितैः । 'दिव्यं लवङ्गके दिव्यं वल्गौ दिवि भवेऽन्यवत्' इति विश्वः । दृषदः शिला अपि । द्रवीभावं नयन्तौ प्रापयन्तौ ॥ ८ ॥

दिदृक्षादत्तदृष्टीनां मनस्कारमनीषयोः ।
सपीतिरससंतोषं दिशन्तौ देहकान्तितः ॥ ९ ॥

**दिदृक्षेति** । दिदृक्षया दत्तदृष्टीनां प्रहितनेत्राणां जनानाम् । मनस्कारमनीषयोः मनस्कारस्य चित्ताभोगस्य एकस्मिन् विषये पुनः पुनः मनसः प्रवृत्तेः, मनीषायाः बुद्धेश्च । देहकान्तितः देहकान्त्या ; तृतीयार्थे तसिः । सपीतिरससंतोषं सहपानेन यत्सुखं तेन संतोषम् । दिशन्तौ प्रयच्छन्तौ अनयोर्देहकान्त्या पश्यतां मनस्कारोऽपि सफलीभवति । मनीषापि प्रसीदतीति भावः ॥ ९ ॥

मन्मथायुतसौन्दर्यौ वसन्तायुतसौरभौ ।
शशाङ्कायुतलावण्यौ चण्डरश्म्ययुतद्युती ॥ १० ॥

**मन्मथेति** । मन्मथानामयुतस्य सौन्दर्यमिव सौन्दर्यं ययोस्तौ । एवमग्रिमविशेषणत्रयेऽपि योज्यम् । अत्र सौन्दर्यं सामुद्रिकोक्तप्रकारेणावयवसंस्थानविशेषः । लावण्यम्— 'मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते' इत्युक्तलक्षणः अन्तश्चलन् प्रभाविशेषः, द्युतिः बहिरालोकः इति भेदः ॥ १० ॥

चित्रतामिव नीतानां चित्तचेष्टापहारतः ।
प्रतिसौधं पुरस्त्रीणां निर्विशन्तौ निरीक्षणम् ॥ ११ ॥

**चित्रतामिति** । चित्तचेष्टापहारतः मनोव्यापारापहारात् मनसां

स्तब्धतापादनात्। चित्रतामालेख्यतां नीतानामिव स्थितानां पुरस्त्रीणां निरीक्षणम्। प्रतिसौधं सौधे सौधे; यथार्थे वीप्सायामव्ययीभावः। निर्विशन्तौ उपभुञ्जानौ ॥ ११ ॥

**सुप्रभातमिह प्राप्तं सूषा च सुदिनं च नः।**
**इति वादिभिरन्योन्यं द्रुतचित्तैरनुद्रुतौ ॥ १२ ॥**

**सुप्रभातमिति**। नः अस्माकम्। इह समये। सुप्रभातं शोभनं प्रभातं प्राप्तम्। सूषा शोभनरात्रिश्च प्राप्तेति लिङ्गविपरिणामेनानुषङ्गः। 'विभावरी नक्तमूषा च शर्वरी' इति हलायुधः। सुदिनं शोभनं दिनं च प्राप्तम् इति इत्थमन्योन्यं वादिभिः दिव्यवस्तुदर्शनलाभात् तत्कालस्तुतिं वदद्भिः। द्रुतचित्तैः विलीनचेतोभिः जनैः। अनुद्रुतौ अनुसृतौ ॥ १२ ॥

**बलादपहृतैस्तत्र रजकाद्राजसंमतात्।**
**परभागश्रियं प्राप्तौ वासोभिरसितारुणैः ॥ १३ ॥**

**बलादिति**। तत्र मधुरायाम्। राज्ञः कंसस्य संमतात् इष्टात्। रजकात् निर्णेजकात्। बलात् प्रसह्य। अपहृतैः असितारुणैः वासोभिः परभागश्रियं प्राप्तौ असितारुणवस्त्रधारणात् यथाक्रमं सिताभिवद्राम-कृष्णविग्रहसंसर्गात् प्रतीयमानो गुणोत्कर्षः परभागः। 'परभागो गुणोत्कर्षः' इति वैजयन्ती। तेन शोभां प्राप्तौ ॥ १३ ॥

**लब्धपुण्यविपाकेन मालाकारेण लम्भितैः।**
**शबलौ दामभिश्चित्रैः संदिग्धनवमालिकैः ॥ १४ ॥**

**लब्धेति**। लब्धः पुण्यानां विपाकः फलौन्मुख्यं येन तेन।

मालाकारेण, लम्भितैः प्रापितैः । चित्रैः नानावर्णैः । संदिग्धा नवमालिकाः येषु तैः तत्सदृशैरिति यावत् । दामभिः माल्यैः शबलौ कर्बुरौ ॥

कान्तिनिर्जितया कामात्प्रदिष्टैः कंसकुब्जया ।
दधतौ वर्णकैर्भूयो दिव्यगन्धौ सुगन्धिताम् ॥ १५ ॥

कान्तीति । दिव्यगन्धौ स्वत एवाप्राकृतगन्धयुक्तौ । कान्तिनिर्जितया लावण्यवशीकृतया । कंसकुब्जया कंसस्य सैरन्ध्रया कुब्जया । कामादिच्छया । प्रदिष्टैः दत्तैः वर्णकैः विलेपनैर्गन्धद्रव्यैः । भूयः अत्यर्थं सुगन्धितां दधतौ ॥ १५ ॥

ऋजूकृतसुजाताङ्ग्या ऋजुबुद्ध्याथ कुब्जया ।
प्रणयन्त्या स्वगेहार्त्तिं प्राप्तमन्दस्मितौ मिथः ॥ १६ ॥

ऋजूकृतेति । अथ अनन्तरम् । ऋजूकृतानि विलेपनदानप्रसन्नेन भगवता उन्नमनेन प्रगुणीकृतानि सुजातानि सुन्दराणि अङ्गानि यस्यास्तया । सुजाताङ्ग्या ऋजुबुद्ध्येत्यत्र 'ऋत्यकः' इति प्रकृतिभावः । स्वगेहार्त्तिं प्रणयन्त्या स्वगृहं प्रत्यागन्तव्यमिति याचमानया 'प्रणयः स्यात् परिचये याच्ञायां सौहृदेऽपि च' इति वैजयन्ती । एवंभूतया कुब्जया हेतुनेत्यर्थः । मिथः अन्योन्यम् । प्राप्तमन्दस्मितौ कामोद्रेकादाह्वयतीति विदित्वा आगतमन्दस्मितौ ददृशुः इति एतावत्पर्यन्तं संबन्धः ॥ १६ ॥

ततो विविशतुः शालां बलिसद्मगुहामिव ।
प्रथितां पृथुभिश्चापैः पन्नगैरिव भीषणैः ॥ १७ ॥

तत इति । ततः कुब्जा ऋजूकरणानन्तरम् । पन्नगैरिव भीषणैः

पृथुभिः चापैः प्रथितां पृथूकृतां पूरिताम्; पृथुशब्दात् तत्करोतीति ण्यन्तात् कर्मणि क्तः। णाविष्ठवद्भावात् 'र ऋतो हलादेर्लघोः' इति ऋकारस्य रेफः। अत एव पन्नगोपमचापपूरितत्वात् बलिसद्मगुहां पातालगुहामिव स्थिताम्। शालां धनुःशालां विविशतुः॥ १७॥

**तत्र शैलनिभं शौरिस्त्रिदशैरपि दुर्दमम्।**
**ददर्शाजगवप्रख्यं दम्भोलिकठिनं धनुः॥ १८॥**

**तत्रेति**। तत्र धनुःशालायाम्। शौरिः शैलनिभं पर्वतोपमम्। अजगवप्रख्यं पिनाकसदृशम्। दम्भोलिकठिनं कुलिशवत् कठिनम्। अत एव त्रिदशैरपि दुर्दमं भङ्क्तुमशक्यम्। धनुः कंसस्य चापं पूर्वं ददर्श॥ १८॥

**स्वपूर्वप्रभवोदन्तमिदानींतनयन्निव।**
**तदानम्य धनुर्भीमं बभञ्ज भुजलीलया॥ १९॥**

**स्वपूर्वेति**। स्वस्य पूर्वप्रभवस्य प्राचीनरघुनाथावतारस्य उदन्तं वृत्तान्तं हरधनुर्भङ्गरूपम्। इदानींतनयन्निव इदानींतनं कुर्वन्निव। भीमं भयंकरम्। तत् धनुः आनम्य भुजलीलया भुजक्रीडया विलासेन वा 'लीला क्रिया विलासश्च' इति वैजयन्ती। बभञ्ज भग्नमकरोत्॥ २०॥

**महता तस्य घोषेण विदद्रे द्विषतां मनः।**
**सौधानि मधुरायाश्च शुष्काशनिविडम्बिना॥**

**महतेति**। तस्य भज्यमानस्य धनुषः। शुष्काशनिविडम्बिना आकस्मिकत्वात् अवृष्टिनिर्घातमनुकुर्वता तथा भीषणेन। महता घोषेण।

द्विषतां कंसादीनां मनो विदध्रे विदीर्णमासीत् । मधुरायाः सौधानि सुधाधवलितानि गृहाणि च विदद्रिरे इत्यनुषङ्गः । 'सौधोऽस्त्री सुधाया श्वेतम्' इत्युभयलिङ्गत्वानुशासनान्नपुंसकलिङ्गप्रयोगः ॥ २० ॥

चापगोपचमूं हत्वा तौ जगद्धितमानुषौ ।
अतिलङ्घ्य धनुःशालां रङ्गद्वारमवापतुः ॥ २१ ॥

**चापेति** । जगद्धितमानुषौ लोकहितमनुष्यावताररूपौ । तौ रामकृष्णौ । चापगोपचमूं चापभञ्जनादुपर्यापतन्तीं चापसंरक्षकसेनाम् । हत्वा, रङ्गस्य मल्लयुद्धमण्डपस्य द्वारम् अवापतुः । 'रङ्गो रणखले रागे' इति विश्वः ॥

तत्र मृत्युमिव क्रुद्धं निदध्यतुररिंदमौ ।
नागं कुवलयापीडं निह्नुवानमिवाम्बरम् ॥ २२ ॥

**तत्रेति** । अरिंदमौ शत्रूणां दमयितारौ । 'संज्ञायां भृतृवृजि—' इत्यादिना खच् मुमागमश्च । तत्र रङ्गद्वारे । क्रुद्धं मृत्युं जगत्प्राणापहारिणं देवताविशेषमिव स्थितम् । अम्बरम् आकाशम् । निह्नुवानम् अपलपन्तम्; औन्नत्येन सर्वमाक्रम्यन्तमिव स्थितम् । तं कुवलयापीडं नाम नागम् । निदध्यतुः अपश्यताम् ॥ २२ ॥

तमासाद्य द्रुतं शौरिस्त्रासितात्रिदशद्विपम् ।
पञ्चवक्त्र इवाक्रम्य पातयामास भूतले ॥ २३ ॥

**तमिति** । शौरिः त्रासिताः उद्वेजिताः त्रिदशद्विपाः ऐरावतादयो येन तम् । कुवलयापीडं द्रुतमासाद्य । पञ्चवक्त्रः सिंह इवाक्रम्य भूतले पातयामास ॥ २३ ॥

तस्य दन्तौ समुद्धृत्य श्वेताद्रिशिखरोपमौ ।
विदधाते यदुश्रेष्ठौ मल्लयुद्धमहायुधे ॥ २४ ॥

**तस्येति** । तस्य भूतले पातितस्य गजस्य । श्वेताद्रिशिखरोपमौ दन्तौ समुद्धृत्य । यदुश्रेष्ठौ रामकृष्णौ । मल्लयुद्धस्य महती आयुधे । विदधाते चक्रतुः; यद्यायुधैर्योद्धुमागच्छेयुः तदा इदमायुधं भवत्विति ऊहतुरित्यर्थः । अग्रे त्वनायुधमेव युद्धं वक्ष्यते ॥

सह गोपैरधिष्ठाय रङ्गमध्यमरिंदमौ ।
बलिजिद्बलभद्रश्च बालवृत्तैरदीव्यताम् ॥ २५ ॥

**सहेति** । अरिंदमौ रिपूणां दमयितारौ । बलिजित् बलेरसुरस्य जेता कृष्णः बलभद्रश्चेत्युभौ । गोपैः सह । रङ्गमध्यम् अधिष्ठाय आक्रम्य । बालवृत्तैः अदीव्यताम् अक्रीडताम् ॥ २५ ॥

नृपोपहूतैरथ तौ विहारैक्यमवापतुः ।
नर्मकारकजल्पाकनटनर्तकगायकैः ॥ २६ ॥

**नृपेति** । अथ तौ रामकृष्णौ । नृपोपहूतैः कंसेन रङ्गमण्डपे समाहूतैः । नर्मकारकजल्पाकनटनर्तकगायकैः नर्मकारकाः परिहासकाः, जल्पाकाः सदसि वाग्मिनः, नटाः रसप्रधानाभिनयाः, नर्तकाः भावप्रधानाभिनयाः, गायकाः वैणिकाः शारीरगानकृतश्च । तैः सह विहारैक्यमवापतुः । स्वयमपि तैः संयुज्य नर्मकारकादिभावमनुकृत्य विजहतुरित्यर्थः ॥ २६ ॥

जनस्य महतस्तत्र जनयामासतुस्तदा ।
महता कान्तिवर्षेण दिदृक्षां देवमातृकाम् ॥ २७ ॥

**जनस्येति** । तत्र रङ्गे । तदा महता कान्तिवर्षेण । देवमातृकां

वृष्टिसंवर्धिताम् । महतो जनस्य दिदृक्षां जनयामासतुः । तयोर्जाता जनस्य दिदृक्षा तत्कान्तिवर्षेण उत्तरोत्तरं प्रवृद्धाभूदित्यर्थः ॥ २७ ॥

**उपवेदमधीयुर्ये रणार्थं रङ्गदर्शिनः ।**
**तमेव ते द्विधाभूतं तावुभावभिमेनिरे ॥ २८ ॥**

**उपवेदमिति** । ये रङ्गदर्शिनः । रणार्थं युद्धप्रयोजनम् । उपवेदं धनुर्वेदाख्यम् । अधीयुः स्मरन्ति स्म । अधिपूर्वात् 'इक्स्मरणे' इति धातोः लिङ् । ते, तावुभौ रामकृष्णौ । तमेव धनुर्वेदम् । द्विधाभूतमभिमेनिरे तयोः क्षात्रतेजोविशेषं दृष्ट्वा तथा मेनिरे इत्यर्थः ॥

**तदालोकनलाभेन सामाजिकजनस्तदा ।**
**अनिदंपूर्वमाह्लादमपवृक्त इवान्वभूत् ॥ २९ ॥**

**तदालोकनेति** । तदा सामाजिकजनः समाजे मिलितो जनः । तदालोकनलाभेन तयोर्दर्शनस्य लाभेन । अपवृक्तः मुक्त इव । अनिदंपूर्वम् आह्लादं नित्यसिद्धमानन्दम् । अन्वभूत् । मुक्तो हि भगवद्दर्शनानन्तरं नित्यसिद्धमपि संसारकाले तिरोहितं भगवत्संकल्पादभिव्यक्तं निरतिशयानन्दमनुभवति । तद्वत् वैषयिकानन्द एव निरतिशयोत्कर्षव्यञ्जनाय नित्यानन्दत्वाध्यवसायः ॥ २९ ॥

**बिम्बिताकृतयो नार्यस्तद्देहमणिदर्पणे ।**
**तत्परिष्वङ्गनिर्वेशमयत्नादिव लेभिरे ॥ ३० ॥**

**बिम्बितेति** । तस्य देह एव मणिदर्पणे । बिम्बिताकृतयः प्रतिबिम्बितदेहाः । नार्यः, अयत्नादिव अयत्नादेव । तत्परिष्वङ्गनिर्वेशं तदालिङ्गनसौख्यम् । लेभिरे । तद्देहे स्वप्रतिबिम्बसंक्रान्तिमात्रेण तदालिङ्गनेनेव निर्विविशुरित्यर्थः ॥ ३० ॥

**गीतमञ्जुगिरस्तत्र नृत्तसंवादिविभ्रमाः ।**
**मञ्चेषु हरिरद्राक्षीद्वरस्त्रीर्मदिरेक्षणाः ॥ ३१ ॥**

**गीतेति** । तत्र रङ्गे । हरिः मञ्चेषु पर्यङ्केषु । गीतमञ्जुगिरः गानेन हृद्यवाचः । नृत्तसंवादिविभ्रमाः नृत्तानुकारिशृङ्गारचेष्टाः । मदिरेक्षणाः मदिराणि मन्दीकृतानि 'व्याघूर्णमानतारं च क्षामोपान्तविलोकनम् । चक्षुर्विकसितापाङ्गं मदिरं तरुणे मदे' इत्युक्तलक्षणानि ईक्षणानि यासां ताः वरस्त्रीः उत्तमाङ्गनाः । अद्राक्षीत्, दृशेर्लुङ् । 'वाम्शसोः' इति इयङ्भावपक्षे स्त्रीरिति दीर्घः ॥ ३१ ॥

**धृतहेतिपरिष्कारान्धीरोद्धतविलोकितान् ।**
**ददर्श पृथिवीपालान्देवानिव दिवश्च्युतान् ॥३२॥**

**धृतेति** । धृताः हेतयः आयुधानि परिष्काराः भूषणानि च यैस्तान् । धीराणि उद्धतानि सगर्वाणि च विलोकितानि येषां तान् । तेजसा दिवश्च्युतान् देवानिव स्थितान् । पृथिवीपालान् ददर्श । 'स्फुरत्प्रभावगम्भीरं धीरमित्युच्यते बुधैः । सगर्वमुद्धतं फुल्लतारं स्थिरकनीनिकम्' इति दृष्टिलक्षणेषु भावप्रकाशः ॥ ३२ ॥

**तमसामिव संघातं समाहारमिवैनसाम् ।**
**तुङ्गमञ्चगतं कंसं तुष्टो हरिरवैक्षत ॥ ३३ ॥**

**तमसामिति** । हरिः, तमसाम् अन्धकाराणां बहूनां तमोगुणानां वा संघातमिव । एनसां पापानां समाहारमिव च स्थितम् । तुङ्गमञ्चगतम् उन्नतपर्यङ्कगतं कंसम् । तुष्टः शत्रुः हस्तलग्न इति संतुष्टः सन् । ऐक्षत ॥ ३३ ॥

**ललितारम्भया वृत्त्या रङ्गभाजां रसावहा ।**
**नरवृत्तान्तविहृतिर्ववृधे रामकृष्णयोः ॥ ३४ ॥**

**ललितेति ।** ललितारम्भया हृद्योपक्रमया । वृत्त्या भङ्ग्या । रङ्गभाजां जनानाम् । रसावहा आनन्दकारिणी । अवसाने कंसादिवधेन भयावहत्वेऽपि उपक्रमे बाल्यवृत्तादिरूपतया द्रष्टृणामानन्दकारिणीत्यर्थः । नरवृत्तान्तनाटिका मानुषचरित्राभिनयरूपा रामकृष्णयोः विहृतिः क्रीडा ववृधे ॥ ३४ ॥

**विदधे सिंहनादेन तारेण यदुसिंहयोः ।**
**गर्जितं दैत्यमल्लानां गोमायुगणवाशितम् ॥ ३५ ॥**

**विदधे इति ।** यदुसिंहयोः यदुश्रेष्ठयोः रामकृष्णयोः । तारेण उच्चतरेण । सिंहनादेन क्ष्वेडितेन कर्त्रा । दैत्यमल्लानां चाणूरमुष्टिकादीनाम् । गर्जितम् अहंकारकृतशब्दविशेषः । गोमायुगणवाशितं सृगालसमूहरुतम् । विदधे कृतम् । तेन सृगालस्वनितमिव तुच्छीकृतमित्यर्थः । 'तिरश्चां वाशितं रुतम्' इत्यमरः ॥ ३५ ॥

**तावुभौ डिम्भवपुषौ ख्यातवीर्यपराक्रमौ ।**
**चाणूरो मुष्टिकश्च द्वौ नियोद्धुमभिजग्मतुः ॥ ३६ ॥**

**ताविति ।** डिम्भवपुषौ अर्भकरूपौ । ख्यातवीर्यपराक्रमौ वीर्यं स्वाभाविकं बलम्, पराक्रमो युद्धेषु विक्रमणम् इति भेदः । तावुभौ रामकृष्णौ कर्मणी । चाणूरः मुष्टिकश्चेति द्वौ मल्लौ । नियोद्धुं बाहुभिर्योद्धुम् । अभिजग्मतुः । 'नियुद्धं बाहुयुद्धं स्यात्' इत्यमरः ॥

अथ ताभ्यां युद्धे नियोजितयोः रामकृष्णयोः तत्रत्यं जनवादं श्लोकपञ्चकेनाह—

अहो महदुपक्रान्तमत्याहितमिदं यतः ।
अशिक्षितरणौ बालौ मल्लयुद्धे नियोजितौ ॥ ३७ ॥

**अहो इति** । महदिदमत्याहितं प्राणानाकाङ्क्षि कर्म उपक्रान्तम् । अत्याहितं महाभीत्यां प्राणानाकाङ्क्षिकर्मणि' इति यादवः । अशिक्षितरणौ अनभ्यस्तयुद्धकर्माणौ । बालौ मल्लयुद्धे नियोजिताविति । यतः यदित्यर्थे । यत इति सार्वविभक्तिकस्तसिः । यदेतयोर्मल्लयुद्धे नियोजनम् इदं नियोजयितुः श्रेयस्करं न भवतीत्यत्याहितम् । अहो इति अनुचितं कर्म आरब्धमित्याश्चर्ये ॥ ३८ ॥

शिरीषललितैरङ्गैश्चेष्टितैरपि पेशलैः ।
अद्रिसारकठोराभ्यां कथं योद्धुमिमौ स्थितौ ॥

**शिरीषेति** । इमौ रामकृष्णौ । अद्रिसारकठोराभ्यां पर्वतप्रवरकठिनाभ्यां मल्लाभ्यां सह । शिरीषललितैः शिरीषकुसुमसुकुमारैः अङ्गैः पेशलैः चारुभिः चेष्टितैश्च । कथं योद्धुं स्थितौ । एताभ्यामेतौ योद्धुमयोग्यावित्यर्थः । श्वापदमल्लयोरात्मनोश्चासाम्येऽपि तदनादरेण तयोः बालक्रीडानुवृत्तिम् 'पेशलैरपि चेष्टितैः' इत्यनेन कविः सूचयति ॥

पश्यद्भिरवशैर्नूनं पौरजानपदैर्जनैः ।
पापमेतदनुज्ञातं परपिण्डपरायणैः ॥ ३९ ॥

**पश्यद्भिरिति** । परपिण्डपरायणैः परपिण्डाश्रयैः कंसोपजीविभिरिति यावत् । 'त्रिषु स्यात्तत्परेऽभीष्टेऽप्याश्रयेऽपि परायणम्' इति रभसः । पश्यद्भिः पौरजानपदैः पुरभवैः जनपदभवैः जनैः । नूनम् अवशैः कंसं निवारयितुमशक्तैरेव । एतत् रामकृष्णयोः मल्लयुद्धनियोजनरूपं पापमनुज्ञातम् । अन्यथा अत्यन्तानुचितमिति निवारयेयुरेवेति भावः ॥

मधुकैटभदुर्दान्तौ मल्लबृन्दारकाविमौ ।
यदि जेष्यति यः कश्चित् स किं न पुरुषोत्तमः ॥

मधुकैटभेति । मधुकैटभाविव दुर्दान्तौ दृप्तौ । इमौ मल्लबृन्दारकौ मल्लश्रेष्ठौ । 'बृन्दारकः सुरे श्रेष्ठे' इति विश्वः । यदि यः कश्चित् जेष्यति, सः किं न पुरुषोत्तमः पुरुषोत्तम एव । एतौ मधुकैटभाविव पुरुषोत्तमादन्येन जेतुं न शक्याविल्यर्थः ॥ ४० ॥

अथ वा पूतनादीनामप्रयत्नेन घातुकौ ।
नियुद्धे मल्लमुख्येभ्यो नालमेतौ न वा कथम् ॥४१॥

अथ वेति । पूतनादीनां पूतना राक्षसी यमलार्जुनौ स्थावरौ धेनुकादयोऽपि तिर्यगादिरूपा इति तेषाम् । अयत्नेन घातकावपि एतौ । [illegible]ष्वपि मुख्याश्चाणूरादयो ये नियोद्धुमुद्युक्ताः तेभ्यः । नालं न पर्याप्ताविल्यर्थः । 'नमः स्वस्ति—' इत्यादिना अलंयोगे चतुर्थी । पुनः प्रथमवक्तॄणां वाक्यम्— न वा कथम्, नालमिति कथम् । अलमेवेल्यर्थः । नञर्थे नवेति पदम् । पूतनादीनामयत्नेन घातुकौ युद्धे यत्नेन विना मल्लान् जेतुं शक्ताविति भावः ॥ ४१ ॥

जनवादमिमं शृण्वञ्जातहासो जनार्दनः ।
भुजमास्फोटयामास भूभारहरणे क्षमम् ॥ ४२ ॥

जनेति । इमं जनवादं शृण्वन्, तेन जातहासश्च जनार्दनः भूभारस्य हरणे । क्षमं शक्तम् । भुजमास्फोटयामास मल्लयुद्धोद्योगसूचकं भुजमूलास्फोटनं चकार ॥ ४२ ॥

तदास्फोटितशब्देन स्फुटत्कर्णस्य भूयसा ।
कंसमल्लगणस्यासीत्कथा गोपालकाश्रया ॥ ४३ ॥

**तदास्फोटितेति** । भूयसा उच्चतरेण । तदास्फोटितशब्देन तस्य कृष्णस्य भुजास्फालनध्वनिना । स्फुटत्कर्णस्य दलच्छ्रोत्रस्य । कंसमल्लगणस्य कंससंबन्धिमल्लानां समूहस्य । गोपालकाश्रया वल्लवविषयिणी कथा आसीत्; कंसमल्लाः गोपानुद्दिश्य वाचं कथयामासुरित्यर्थः ॥ ४३ ॥

गोपयुद्धधिया जिह्रचाणूरः कूणितेक्षणः ।
पुष्पपेषमिवोत्पश्यन्नाद्रवत्पुष्करेक्षणम् ॥ ४४ ॥

**गोपेति** । कूणितेक्षणः मदेन कूणितनयनः । गोपयुद्धधिया हीनबलैः गोपैर्युद्धकरणबुद्ध्या । जिह्रत् जुगुप्सन् । चाणूरः, पुष्पपेषं पुष्पमर्दनमिव । उत्पश्यन्; गोपानां हननं पुष्पमर्दनतुल्यमिति विचारयन् सन् । पुष्करेक्षणं श्रीकृष्णम् । आद्रवत् ॥ ४४ ॥

यथोचे विषमं तत्र नियुद्धं स्थूलदृष्टिभिः ।
तत्त्वदृष्टिभिरप्येवं विश्वाधिकबले हरौ ॥ ४५ ॥

**यथेति** । तत्र सभायाम् । स्थूलदृष्टिभिः स्थूले कूले—मिथ्याभूते चाणूरस्य बलाधिक्ये दृष्टिः बुद्धिः येषां तैः । यद्वा स्थूला विमर्शाक्षमा दृष्टिः ज्ञानं येषां तैः तथोक्तैः; बाह्यस्थौल्याद्यवलोकनमात्रेण चाणूर एव बलाधिकः इति निश्चिन्वाद्भिः, न त्वन्तःसारवेदिभिरिति भावः । नियुद्धं कृष्णचाणूरयोः बाहुयुद्धम् । विषमम् असदृशम् । यथा यद्वत् । ऊचे उक्तम् । एवं तथैव । विश्वाधिकं सर्वप्रपञ्चाभ्यधिकं बलं यस्य तस्मिन्—हरौ सर्वलोकहरणसमर्थे श्रीकृष्णे बालेऽपीति भावः । तत्त्वं

परं ब्रह्मेति दृष्टिः येषां तैः तथोक्तैः सूक्ष्मदृष्टिभिः देवादिभिरपि । नियुद्धं विषममूचे । समुच्चयोपमया उभयैरपि प्रकारभेदेन विषममूचे इति प्रदर्शितम् ॥ ४५ ॥

न्यूनाधिकसमारम्भो विभुस्तत्र विहारतः ।
विषादप्रीतिसंदेहान् सभ्यानां समतानयत् ॥ ४६ ॥

**न्यूनेति ।** तत्र सभायाम् । विहारतः क्रीडया । न्यूनाधिकसमारम्भः समारभ्यत इति समारम्भः प्रस्तुतं नियुद्धम्, कदाचित् न्यूनः कदाचित् अधिकः समारम्भो यस्य सः । विभुः कृष्णः । सभ्यानां सभायां साधूनाम् । विषादप्रीतिसंदेहान् समतानयत् न्यूनताप्रदर्शनेन विषादम्, अधिकताप्रदर्शनेन प्रीतिम्, उभयप्रदर्शनावृत्त्या जयपराजयसंदेहं च संतानयति स्म ॥ ४६ ॥

स बालः प्रचयं प्राप बालातप इव क्रमात् ।
नीहार इव चाणूरः शनैरपचयं ययौ ॥ ४७ ॥

**स इति ।** स बालः कृष्णः । बालातप इव प्रातःकालातप इव । क्रमात् प्रचयं प्राप न्यूनाधिकभावपरिवृत्तिं विना उत्तरोत्तरमाधिक्यमेव ययौ । चाणूरस्तु बालातपवृद्धिसमये नीहार इव शनैरपचयं ययौ ॥ ४७ ॥

वारितेष्वथ वाद्येषु विषण्णेन महीभृता ।
दिव्यदुन्दुभयो नेदुर्निगमध्वाननिर्भराः ॥

**वारितेष्विति ।** अथ चाणूरस्यापचयानन्तरम् । विषण्णेन महीभृता, वाद्येषु स्वकीयपटहादिषु । वारितेषु सत्सु । निगमध्वाननिर्भरा

दिवि मुनिजनाघुष्यमाणवेदध्वनिना अतिवेलाः। दिव्याः दिवि भवाः दुन्दुभयो भेर्यो नेदुः ॥

वल्गता बलभद्रेण कृष्णेन च वसुंधरा ।
वादित्रमिव दध्वान मधुरेन्द्रभयानकम् ॥ ४९ ॥

**वल्गतेति**। रङ्गमण्डपे वल्गता उत्प्लवमानेन। बलभद्रेण कृष्णेन च; तयोर्वल्गनेन हेतुनेति यावत्। वसुंधरा रङ्गभूमिः। मधुरेन्द्रभयानकं कंसस्य भयंकरम्। वादित्रं तयोर्जयवाद्यमिव। दध्वान ॥ ४९ ॥

भीमकालियभोगीन्द्रस्फटारङ्गमहानटः ।
मल्लरङ्गनटं दैत्यं मधुमाथं ममाथ सः ॥ ५० ॥

**भीमेति**। भीमस्य भयंकरस्य कालियभोगीन्द्रस्य स्फटा फण एव रङ्गो नृत्तमण्डपः तस्य महानटः तत्र कृतमहानटनः। सः कृष्णः। मल्लरङ्गनटं मल्लानां रङ्गो रणस्थानं तस्य नटवत् नटं तं युद्धेन विहरन्तं दैत्यं चाणूरम्। मधुमाथं मधुनामकमसुरमिव ममन्थ मथ्नाति स्म। 'उपमाने कर्मणि च' इति णमुल्प्रत्ययः। 'कषादिषु यथाविध्यनुप्रयोगः' इति तस्यैव धातोरनुप्रयोगः ॥ ५० ॥

मुष्टिघातेन रामस्य मुष्टिकश्च निपातितः ।
भोजाधिपमहोत्पातं भूमिकम्पमवर्तयत् ॥ ५१ ॥

**मुष्टीति**। रामस्य मुष्टिघातेन मुष्टिहननेन निपातितः मुष्टिकश्च भोजानां भोजाख्यदेशविशेषाणाम् अधिपस्य कंसस्य महोत्पातम् अरिष्टसूचकमहोत्पातरूपं भूमिकम्पम् अवर्तयत् अजनयत्। 'वृतु वर्तने' इति धातोः णिच् ॥

रामरामानुजाभ्यां तौ रावणेन्द्रजिताविव ।
नमयामासतुः पृथ्वीं नगपातं निपातितौ ॥ ५२ ॥

**रामेति** । रावणेन्द्रजिताविव, रामरामानुजाभ्यां बलभद्रकृष्णाभ्याम्, पक्षे रामलक्ष्मणाभ्याम् । नगपातं निपातितौ 'उपमाने कर्मणि च' इति कर्मण्युपमाने उपपदे णमुल् । पूर्ववदनुप्रयोगः । तौ चाणूरमुष्टिकौ । पृथ्वीं नमयामासतुः ; देहभारेणेति भावः ॥ ५२ ॥

शायितौ वीरशयने दृष्ट्वा चाणूरमुष्टिकौ ।
द्रुतमभ्यद्रवन्कृष्णं तत्र तोसकलादयः ॥ ५३ ॥

**शायिताविति** । तत्र रङ्गे । वीरशयने युद्धभूमौ । शायितौ रामकृष्णाभ्यां निपातितौ । चाणूरमुष्टिकौ दृष्ट्वा । तोसकलादयः तोसकलवृषभादयः कंसमल्लाः । कृष्णं द्रुतमभ्यद्रवन् अभ्यधावन् ॥ ५३ ॥

स तानपि नियुद्धेन वसुधायां न्यपातयत् ।
कालो युगपदुद्भूतान्कल्पान्तमिहिरानिव ॥ ५४ ॥

**स इति** । स कृष्णः । तानपि, नियुद्धेन बाहुयुद्धेन । युगपदुद्भूतान् कल्पान्तमिहिरान् प्रलयकालसूर्यान् । काल इव वसुधायां न्यपातयत् । अरोगोभ्रजः पटरः पतङ्गः इत्याद्याः सप्त कल्पान्तसूर्याः । लोकदाहे तत्प्रयोजने निर्वृत्ते सर्वग्रासाय प्रवृत्तः प्रलयः तानपि ग्रसतीति पुराणप्रसिद्धिः ॥ ५४ ॥

गरुत्मानिव भूभागाद्विग्न्नाभोगमायतम् ।
कंसमञ्चमपद्वारादुदप्लवत् केशवः ॥ ५५ ॥

**गरुत्मानिति।** केशवः गरुत्मान् भूभागात् आयतं गगनाभोगम् आकाशपरिणाहमिव अपद्वारात् अमार्गभूतात् देशात् कंसमञ्चम् उदप्लवत कंसस्य पर्यङ्कं प्रति उत्प्लवनमकरोत्। वधार्थं शत्रुगृहं प्रविशद्भिः अमार्गेण प्रवेष्टव्यमिति प्रसिद्धिः। तथैव जरासन्धवधार्थं तद्गृहं प्रविशद्भ्यां कृष्णभीमसेनाभ्यामपद्वारेण प्रविष्टमिति भारतादिषु श्रूयते ॥५५॥

**कचग्रहेण विवशं कंसमाकृष्य पातयन्।**
**पतन्वक्षःस्थले तस्य तत्सत्त्वमुदपाटयत् ॥ ५६ ॥**

**कचेति।** कचग्रहेण विवशं केशग्रहणेन परवशम्। कंसमाकृष्य पातयन् मञ्चादधः पतितं कुर्वन्। ततः तस्य वक्षःस्थले पतन् कृष्णः। तत्सत्त्वं कंसस्य प्राणम्। उदपाटयत् उत्पाटितमुद्घाटितमकरोत् ॥ ५६ ॥

**महामोहमिवाक्रम्य मातुलं मधुसूदनः।**
**विवेक इव वृत्तस्थमुग्रसेनममोचयत् ॥ ५७ ॥**

**महामोहमिति।** मधुसूदनः कृष्णः। विवेकः तत्त्वावबोध इव मातुलं मातुर्भ्रातरं कंसम्। महामोहमिव आक्रम्य संसारमूलं महदज्ञानमिव नाशयित्वा। वृत्ते सुचरिते। स्थितं निरतम्। उग्रसेनं कंसस्य पितरम्। अमोचयत् कारागृहात् मोचयति स्म। यथा विवेको वृत्ते विवेकानन्तरं शरणवरणेन विषयीकृते भगवति, स्थितमैकान्त्येन निविष्टम्, उग्रसेनं जीवं मोचयति तद्वदिति भावः। 'वृतु वर्तने' इति धातोः वृत्तशब्दो वृत्तवाची। जीवस्य सेना इन्द्रियवर्गः। तस्य चोग्रत्वमुपशान्तवत् स्थितस्यापि विषयसंनिकर्षमात्रेण प्रकोपदर्शनादित्युग्रसेनशब्दस्य जीवपरता ॥ ५७ ॥

**ददौ च कंसभृत्यानां ददतां तत्र जीवितम् ।**
**उन्मुखत्रिदशप्रेक्ष्यामूर्ध्वां गतिमनुत्तमाम् ॥ ५८ ॥**

**ददाविति ।** तत्र रङ्गे । जीवितं ददतां प्रयच्छतां कंसो हत इति रोषात् स्वजीवितमनादृत्य उपर्यापतताम् । कंसभृत्यानाम् । उन्मुखत्रिदशप्रेक्ष्याम् ऊर्ध्वमुखैः देवैः प्रेक्षणीयाम् । देवलोकादप्युपरिवर्तिनीम् अनुत्तमाम् उत्तमा नास्ति यस्यास्ताम् अत्युत्तमाम् । ऊर्ध्वां गतिम् अन्तकाले स्वसंश्लेषपुण्यफलरूपमूर्ध्वलोकं ददौ । 'स्त्रियां तु स्यात्फलं गतिः' इति यादवः । चकारेण प्रथमहताश्चाणूरादयः समुच्चीयन्ते । जीवितं ददतः प्रत्युपकर्तव्या इति भावः ॥ ५८ ॥

**कंसकर्षणमण्डल्यो गम्भीरास्तत्र चक्रिरे ।**
**रणलक्ष्मीनिवासस्य रङ्गस्य परिखा इव ॥ ५९ ॥**

**कंसेति ।** तत्र रङ्गे । गम्भीराः निम्नाः । कंसकर्षणमण्डल्यः कंसकर्षणप्रभवा मण्डलाकाररेखाः रणलक्ष्मीनिवासस्य भगवतो युद्धलक्ष्मीनिवासभूतस्य रङ्गस्य । परिखाः खेयानीव चक्रिरे उपचीयन्ते स्म । 'विभाषा चेः' इति कुत्वम् । राजावरोधस्य परितः परिखा उचितेति भावः ॥५९॥

**सुदामनामा कंसस्य सोदरस्त्वरितः क्रुधा ।**
**बलेन गमितः क्षिप्रमग्रजेन गतां गतिम् ॥ ६० ॥**

**सुदामेति ।** सुदामनाम्ना सुनामेति प्रसिद्धः । कंसस्य सोदरः । क्रुधा क्रोधेन । त्वरितः त्वरां प्रापितः क्रुधान्धः रामकृष्णयोरुपर्यापतितः सन् । बलेन बलदेवेन । अग्रजेन तदग्रजेन कंसेन प्राप्तां

गतिं मरणम् । क्षिप्रं गमितः शीघ्रं प्रापितः ॥ ६० ॥

अनायुधमहायुद्धं दृष्ट्वा हृषितरोमभिः ।
प्रवातकदलप्रख्यैः प्राश्निकैरभितः स्थितम् ॥ ६१ ॥

अनायुधेति । प्राश्निकैः युद्धदर्शिभिः मध्यस्थैः 'मध्यस्थः प्राश्निकः समौ' इति यादवः । अनायुधमहायुद्धं दृष्ट्वा आयुधरहितस्य महतो युद्धस्य दर्शनेन । हृषितरोमभिः विस्मयादुल्लसितरोमाञ्चैः 'हृषेर्लोमसु' इति इडागमः। प्रवातकदलप्रख्यैः प्रकृष्टो वातो यस्मिन् देशे तत्रत्य-कदलीनिभैः, भयात् कदलीवत् कंपमानैरिति यावत् । 'आभा प्रख्योपमाभिख्या प्रकारः संनिभो निभः । नीकाशाद्याश्च साम्यार्थाः समे स्युः शब्दतः परे' इति यादवः । कदल्यां कदलशब्दोऽप्यस्ति । तथा च बालरामायणे प्रयोगः—'पायं पायं कलाचीकृतकदलदलानालि-केरीफलाम्भः' इति । एवंभूतैः सद्भिः अभितः स्थितम् ॥ ६१ ॥

कृतिनस्तादृशं युद्धं किलिकिञ्चितयन्त्रिताः ।
लीना इव च पश्यन्तो लिखिता इव चाभवन् ॥६२॥

कृतिन इति । तादृशम् अन्योन्योपमेयम् । युद्धं पश्यन्तः । कृतिनः धन्याः किलिकिञ्चितयन्त्रिताः, हर्षवशात् शुष्करुदितहासत्रा-सक्रोधभीत्यादीनां संकरः किलिकिञ्चितम् । तेन यन्त्रिताः तद्वशीकृताः सन्तः लीना इव च लिखिता इव चाभवन्; जतुलग्नमण्यादिवत् चित्रलिखितवच्च निश्चलाङ्गा अभवन्नित्यर्थः ॥ ६२ ॥

सिद्धाश्च दिवि तत्तादृक्तालकल्पितताण्डवाः ।
हर्षदुग्धाब्धिकल्लोलं हाहाकारमकल्पयन् ॥ ६३ ॥

सिद्धा इति। सिद्धा देवयोनिविशेषाश्च। दिवि गगने। तत्तादृक्तालकल्पिततांण्डवाः तत्तादृशा तत्तत्ताण्डवानुरूपेण तालेन करतालेन कृतनर्तनाः सन्तः। हर्षदुग्धाब्धिकल्लोलं हर्ष एव दुग्धाब्धिः तस्य महातरङ्गकल्पम्। हाहाकारम् अकल्पयन् हाहाशब्दमकुर्वन् ॥६३॥

**अथ तौ भीमदोर्दण्डकण्डूकर्षणतोषितौ।**
**पितृभ्यां दृष्टजन्याभ्यामुपसृत्य प्रणेमतुः ॥ ६४ ॥**

अथेति। अथ कंसादिवधानन्तरम्। भीमयोः परिपन्थिभयंकरयोः दोर्दण्डयोः कण्डूः कण्डूयायाः युयुत्सायाः कर्षणेन अपनयनेन तोषितौ। तौ रामकृष्णौ। दृष्टजन्याभ्याम् दृष्टयुद्धाभ्याम् 'युद्धमायोधनं जन्यम्' इत्यमरः। पितृभ्यां देवकीवसुदेवाभ्याम् 'पिता मात्रा' इत्येकशेषः। उपसृत्य तत्समीपं गत्वा। प्रणेमतुः। पितृभ्यामिति 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी। तथा च तौ पितरौ प्रीणयितुं प्रणेमतुरित्यर्थः ॥ ६४ ॥

**तौ च तौ मुदितामर्त्यातिरक्तचन्दनरञ्जितौ।**
**अश्रुभिः प्रीतिनिष्यन्दैः पितरावभ्यषिञ्चताम् ॥६५॥**

तौ चेति। तौ पितरौ कर्तारौ। मुदितानामरातीनां रक्तमेव चन्दनं तेन रञ्जितौ। तौ रामकृष्णौ कर्मणी। प्रीतिनिष्यन्दैः प्रीतेरन्तः परिपूर्णायाः निष्यन्दैरिव स्थितैः। अश्रुभिः आनन्दवाष्पैः। अभ्यषिञ्चताम् ॥ ६५ ॥

**विबुधत्वमिव प्राप्तो वसुदेवः सुतेक्षणात्।**
**सतत्त्वप्रतिबोधेन सात्त्वतां पतिमस्तुत ॥ ६६ ॥**

**विबुधत्वमिति** । सुतेक्षणात्, विबुधत्वं देवत्वम् । प्राप्त इव स्थितः तथा कृतार्थतां मन्यमानो वसुदेवः सतत्त्वप्रतिबोधेन भगवदनुग्रहात् तत्त्वावबोधेन । 'रूपतत्त्वं च सतत्त्वं च स्वरूपं च स्वलक्षणम्' इति वैजयन्ती । सात्त्वतां पतिं सात्त्वतं नाम वैष्णवतन्त्रं तदाचक्षते इति सात्वतः सात्त्वततन्त्रप्रतिपादकाः । 'तदाचष्टे' इति णिचि णाविष्ठवद्भावाट्टिलोपे क्विपि 'णेरनिटि' इति णिलोपे क्विपः सर्वापहारिणि लोपे च सति तत्सिद्धिः । सात्त्वच्छब्दादामि सति सात्त्वतामिति रूपम् । तेषां पतिं वैष्णवतन्त्रप्रवक्तॄणां पालकं कृष्णम् । अस्तुत स्तुते स्म ॥

**नमस्ते नाभिनालीकरजसा सृष्टवेधसे ।**
**अजाय सर्ववेदानामेकवेद्याय विष्णवे ॥ ६७ ॥**

**नमस्त इति** । नाभिनालीकरजसा सृष्टवेधसे सृष्टचतुर्मुखाय । वेधसो नाभिकमलोत्पन्नत्वात् कमलावयवभूतः परागः तस्योपादानमिति भावः । अजाय जननरहिताय । सर्ववेदानामेकवेद्याय सर्वेषां वेदानां मुख्यप्रतिपाद्याय । विष्णवे आदिपुरुषोत्तमाय । ते तुभ्यं नमः ॥ ६७ ॥

**अनन्याधारमाधारमनन्येश्वरमीश्वरम् ।**
**अनुशृण्वन्ति सन्तस्त्वामनन्याधिपतिं पतिम् ॥ ६८ ॥**

**अनन्याधारमिति** । सन्तः ब्रह्मविदः । 'अस्ति ब्रह्मेति चेद्वेद' इत्यादिश्रुतेः । अनन्याधारम् आधारम् आधारान्तररहितं स्वयं जगतामाधारम् । अनन्येश्वरमीश्वरम् अनन्याधिपतिं पतिमिति तत्राप्येवम् । ऐश्वर्यं नियमनशक्तियोगः; पतित्वं स्वाभाविकं शेषित्वम् इत्याशयेन पृथगुक्तिः । अनुशृण्वन्ति अभिनन्दि । 'स भगवः कस्मिन् प्रतिष्ठितः स्वे महिम्नि' इत्याद्युपनिषद्भागेष्विति भावः ॥ ६८ ॥

अभङ्गुररसं भोग्यमनपायं रसायनम् ।
अक्षयं धर्मसर्वस्वमविदुस्तव कीर्तनम् ॥ ६९ ॥

**अभङ्गुरेति** । तव कीर्तनम् अभङ्गुररसम् अविनश्वररसं भोग्यम् । अनपायं रसायनम् अपायरहितं जरादिहरम् औषधम् । अक्षयं धर्मसर्वस्वं क्षयरहितं धर्मस्य सर्वस्वम् । अविदुः अजानन् । 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुसादेशः । सन्त इति शेषः । अत्र अभङ्गुररसं भोग्यमिति भोगैकरसिकैः बहिर्मुखैः आदरणीयत्वमुक्तम् । तेषां भोग्यान्तराणि निरन्तरसेव्यानि कदाचिन्नामितया वैरस्यमावहन्ति । त्वच्चरित्रादिकीर्तनं तु 'भजते तादृशीं क्रीडां यां श्रुत्वा तत्परो भवेत्' इति स्मृतेः सर्वदा सेव्यमानमपि नवनवरसमावहतीति व्यतिरेकः । अनपायं रसायनमिति मुमुक्षुभिरादरणीयत्वमुक्तम् । रसायनान्तरं किंचित्कालं जरादिकं प्रतिबध्यापि कालान्तरे जरामरणाद्यवश्यंभावेन फलादपैति । इदं तु भवव्याधिहरं कदाचिदपि फलान्न व्यपैतीति व्यतिरेकः । अक्षयं धर्मसर्वस्वमिति कर्मनिष्ठैः 'यस्य स्मृत्या च नामोक्त्या' इति स्मृतेः कर्मपरिपूर्तिहेतुत्वात् आदरणीयत्वमुक्तम् । धनान्तरं कदाचित् कात्स्न्येन क्षीणं सत् धनिनः परिपोषं न जनयति, इदं तु न तथेति व्यतिरेकः ॥ ६९ ॥

अनुग्रहदशादीप्तमशेषार्थप्रकाशकम् ।
दयासंप्लुतमाहुस्त्वां दीपमन्तस्तमोपहम् ॥ ७० ॥

**अनुग्रहेति** । त्वाम् अनुग्रहदशादीप्तम् अनुग्रहदशा भक्तकृतार्थीकरणावस्था, तस्यां दीप्तं प्रसन्नत्वादुज्ज्वलम्, दशा वर्तिः तस्यां दीप्तमित्यपि गम्यते । 'दशा वर्ताववस्थायाम्' इति विश्वः । अशेषार्थप्रकाशकं

सर्वस्य वस्तुनः प्रकाशकम्, 'तस्य भासा सर्वमिदं विभाति' इति श्रुतेः। दयासंप्लुतं दयया स्नेहेनावसिक्तम्। अन्तस्तमोपहम् आन्तरस्य तमसः तमोगुणस्याज्ञानस्य वा अपहन्तारम्। दीपमाहुः। अन्तारिति भिन्नं पदम्। तमोपहमित्यत्र तमोमात्रमुपपदम्, 'अपे क्लेशतमसोः' इत्यत्र तदन्तविधानाभावात्। एकपदत्वे तु ज्वरापहादिवत् 'अन्येष्वपि दृश्यते' इति डप्रत्ययः ॥ ७० ॥

**देवकी दनुजस्थूणा दिव्यं धाम व्रजाङ्गणम्।**
**रमा राधादयश्चेति राशिभेदैर्न भिद्यसे ॥ ७१ ॥**

**देवकीति**। अस्मिन्नवतारे देवकी जननी। नृसिंहावतारे दनुजस्थूणा हिरण्यासुरगृहस्थूणा जननी। परवासुदेवरूपे दिव्यं धाम परमपदमावासस्थानम्। अस्मिन्नवतारे व्रजाङ्गणम्। परवासुदेवरूपे रमा दयिता। अस्मिन्नवतारे दयिता राधा नीलादयश्च इति राशिभेदैः त्वं न भिद्यसे भिन्नो न क्रियसे; देवक्यादयो दनुजस्थूणादयश्च जनन्यादिराशयः परं भिद्यन्ते। पररूपे अवतारान्तरेषु अस्मिन्नवतारे च सर्वत्र एकरूपस्य तव ते भेदका न भवन्तीत्यर्थः ॥ ७१ ॥

**नियन्ता सर्वभूतानां नियन्तव्यैर्नियम्यसे।**
**पितामहमुखैः पुत्री मम पुत्रोऽसि मायया ॥ ७२ ॥**

**नियन्तेति**। सर्वभूतानां नियन्ता त्वं नियन्तव्यैः त्वया नियमनीयैः इन्द्रादिभिर्नियम्यसे उपेन्द्राद्यवतारेष्विति भावः। किं बहुना? पितामहमुखैः ब्रह्मप्रभृतिभिः। पुत्री पुत्रवान्। त्वं मायया त्वदिच्छारूपया। मम पुत्रोऽसि; तव चारित्राण्यतिचित्राणीति भावः ॥ ७२ ॥

महता त्वत्पदेनैव मारुतिन्यायमाश्रिताः ।
निस्तरन्त्यचिरात्सन्तो दुस्तरं भवसागरम् ॥ ७३ ॥

**महतेति** । सन्तः सात्त्विकाः । मारुतिन्यायमाश्रिताः मरुतोऽपत्यस्य हनुमतो भङ्गीमाश्रिताः सन्तः । महता पूजितेन त्वत्पदेनैव त्वच्चरणेनैव अन्यानपेक्षेण, मारुतिपक्षे लक्ष्मणा अङ्गुलीयकेनेति योज्यम् । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । दुस्तरं तर्तुमशक्यम् । भवसागरम् अचिरात् निस्तरन्ति ॥ ७३ ॥

अहितोदन्वदौर्वाग्निमशेषोत्कर्षमातरम् ।
भवभैमरथीं भक्तिं भजन्ति त्वयि साधवः ॥ ७४ ॥

**अहितेति** । साधवः । अहितोदन्वदौर्वाग्निं दुःखसागरस्य वडवाग्निम्, तद्वच्छोषकमित्यर्थः । अशेषोत्कर्षमातरम् । अशेषेभ्यः संसारिभ्यः ब्रह्मादिकीटपर्यन्तेभ्यः उत्कर्षस्य जननीम् । भवभैमरथीं भवस्य संसारस्य भैमरथीसंज्ञां रात्रिं तद्वन्नाशिनीम् । त्वयि भक्तिं भजन्ति ॥ ७४ ॥

भरन्यासाश्वयुक्तेन भाववेगप्रधाविना ।
मनोरथेन गन्तव्यः सारथिश्च भवान्सताम् ॥ ७५ ॥

**भरन्यासेति** । भरन्यासः भगवति भरस्य न्यसनं प्रपदनमेवाश्वः तद्युक्तेन । भाववेगप्रधाविना भावो भक्तिरेव वेगः तेन प्रधावनशीलेन । मनसैव रथेन । गन्तव्यः प्राप्तव्यः । सारथिः तस्य रथस्य यन्ता च भवानेव । 'षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति' इति श्रुतेः भक्तश्च परमपदप्राप्तिपर्यन्तं पुरुषोऽन्तःकरणोपहितो गच्छति, ततः तं विहाय तत्र भगवन्तमुपैति । तस्मात्साम्यान्मनसो रथत्वेन रूपणम् । रथेन गच्छन्नपि गन्तव्यस्थानप्राप्तिपर्यन्तं तद्युक्तो

गच्छति । ततः तं विसृज्य तत्राधिगन्तव्यं राजानमुपैति । तस्य च मनोरथस्य परमपदपर्यन्ताकृष्टिः भरन्यासवशादेवेति तस्याश्वत्वेन रूपणम् । भरन्यासाश्वाधेयत्वान्मनोरथस्य परमपदप्राप्तौ त्वरितत्वापादकत्वाच्च भक्तेर्वेगत्वेन रूपणम् । भावशब्देनात्र फलभक्तिर्विवक्षिता, न तु साधनरूपा । फलभक्तेरेव प्रपत्त्याधेयत्वात्तेन प्रपदनेन परमपदप्राप्तावुपायान्तरभूतायाः साधनभक्तेरनपेक्षणाच्च अन्तर्यामितया प्रेरकत्वात् भगवतः सारथित्वेन रूपणम् । गन्तव्यत्वं तु स्वाभाविकमिति विवेकः ॥

**वयं तु भवता ग्राह्या वासनादुर्गभेदिना ।**
**मनागिव समुद्बोध्य मा पुनर्मूमुहद्भवान् ॥ ७६ ॥**

**वयमिति** । वासनादुर्गभेदिना वासनैव दुर्गं दुरतिक्रमत्वात्, तत् भिनत्तीति तथोक्तेन । भवता वयं तु, तुशब्दोऽप्यर्थकः वयमपि पूर्वोक्ताः सन्त इवेति भावः । ग्राह्याः दीनतया स्वीकार्याः न तूपेक्षणीया इति भावः । मनागिव स्तोकमिव । समुद्बोध्य गृहीततत्त्वान् कृत्वेति भावः । भवान् पुनः मा मूमुहत् मोहितान् माकार्षीत् । प्रबोधयितव्यानां पुनर्मोहं मा कृथा इत्यर्थः । 'मुह वैचित्त्ये' इति धातोर्ण्यन्ताल्लुङि माङ्योगादडागमाभावः ॥ ७६ ॥

**महतामपि निष्कम्पा मनुष्यत्वमतिस्त्वयि ।**
**दृढलक्षितचिह्नानां दिङ्मोह इव दुर्दमः ॥ ७७ ॥**

**महतामिति** । महतां प्रबुद्धानामपि । निष्कम्पा स्थिरत्वं प्राप्ता । त्वयि मनुष्यत्वमतिः, वर्तत इति शेषः । कथमिव दृढलक्षितचिह्नानां दृढदृष्टसूर्योदयादिलाञ्छनानामपि । दुर्दमः दुःखेनाप्यप्रत्याख्यापनयोग्यः दिङ्मोहः प्राच्यादिषु प्रतीच्यादिभ्रम इव ॥ ७७ ॥

दुरन्तसुखखद्योतं दुःखान्धतमसावृतम् ।
निजेनैव प्रकाशेन निशीथमुपरुन्द्धि नः ॥ ७८ ॥

दुरन्तेति । दुरन्तानि दुःखावसानानि सुखान्येव खद्योताः कीटमणयः यस्मिन् तम् । दुःखान्येव अन्धतमसानि गाढान्धकाराणि तैरावृतम् । नः अस्माकम् । निशीथं संसाराख्यं रात्रिमध्यम् । निजेन त्वदीयेनैव । प्रकाशेन भासा । उपरुन्द्धि अपनयेत्यर्थः ॥ ७८ ॥

मशकानिव मातङ्गः कंसमुख्यानिमान्क्षिपन् ।
यदि विस्मयनीयस्त्वं विस्मये किं न विस्मयः ॥७९॥

मशकानिति । मशकान् मातङ्गो गज इव । कंसमुख्यानिमान् क्षुद्रान् । क्षिपन् निरस्यन् । त्वं यदि विस्मयनीयः तदा विस्मये किं न विस्मयः ? असंभावितार्थदृष्टौ खलु विस्मयो युक्तः । ततः तव कंसादिनिरासो मातङ्गस्य मशकनिरासप्राय इति नात्र विस्मयः कार्यः । किं तु इदं चरितं दृष्ट्वा ये विस्मयन्ते तेषां विस्मय एवासंभावितत्वात् विस्मयः कार्य इति भावः ॥ ७९ ॥

नखलीलाविदार्येषु नाथेषु विबुधद्विषाम् ।
परिष्करणपर्यायाः पञ्चापि तव हेतयः ॥ ८० ॥

नखेति । नखलीलाविदार्येषु त्वदीयनखलीलामात्रेण निर्भेद्येषु । विबुधद्विषां नाथेषु असुरपतिषु विषये । पञ्चापि हेतयः तानुद्दिश्य गृह्यमाणानि तव पञ्चाप्यायुधानि परिष्करणपर्यायाः प्रसाधनस्य प्रत्याम्नायाः ॥ ८० ॥

कालनेमिविकारेऽस्मिन्कंसे विमथिते त्वया ।
ईदृशामितरेषां च दत्त एव जलाञ्जलिः ॥ ८१ ॥

**कालेति** । कालनेमेः असुरस्य विकारे अवतारे । अस्मिन् कंसे । त्वया विमथिते सति । ईदृशाम् एतादृशानाम् असुरावताररूपाणाम् । इतरेषां शिशुपालादीनाम् जलाञ्जलिः निवापजलाञ्जलिः । दत्त एव, तेऽपि त्वया मथितप्राया एवेत्यर्थः । 'आशंसायां भूतवच्च' इति भूतार्थे क्तप्रत्ययः ॥ ८१ ॥

नमितायतविष्कम्भा दानवप्रभवैः क्षमा ।
किंचिदुत्तम्भितेवाद्य कंसभारापहारतः ॥ ८२ ॥

**नमितेति** । दानवप्रभवैः असुराणामवतारैः । नमितः आयतः दीर्घः विष्कम्भः विस्तारः यस्याः सा तथोक्ता । 'विष्कम्भो योगभेदेऽपि विस्तारप्रतिबन्धयोः' इति विश्वः । क्षमा भूमिः । अद्य कंसभारस्यापहारतः अपनयेन । किंचित् उत्तम्भितेव उन्नमितेव जाता ॥ ८२ ॥

न खल्वतिशयं कंचिदियमाधातुमर्हति ।
सुमणावज्ञक्लृप्तेव स्तुतिरस्मत्कृता त्वयि ॥ ८३ ॥

**न खल्विति** । अस्मत्कृता इयं स्तुतिः । सुमणौ उत्तमरत्ने । अज्ञक्लृप्ता रत्नतत्त्वानभिज्ञेन पामरेण कृता । स्तुतिरिव कंचिदतिशयमाधातुं नार्हति खलु । त्वन्महिमाभिज्ञकृतैव स्तुतिरुत्कर्षावहेति भावः ॥

इति विज्ञापितस्तेन व्रीडादिव नतो विभुः ।
बाल्योपलालनमिदं भव्यवृत्तिरभावयत् ॥ ८४ ॥

इतीति । इति उक्तप्रकारेण । तेन वसुदेवेन । विज्ञापितः व्रीडादिव लज्जयेव नतः लज्जाभिनयादवनत इति यावत् । भव्यवृत्तिः शुभचरितः प्रभुः । इदं वसुदेवस्य विज्ञापनं बालोपलालनप्रभावयत्, लोकमोहनाय बालोपलालनत्वेनान्यथासिद्धिं नीतवानित्यर्थः ॥ ८४ ॥

स वाचा सान्त्वयामास पितरं दीनचेतसम् ।
स्ववक्त्रेन्दुविनिष्यन्दिसुधापूरितकुल्यया ॥ ८५ ॥

स इति । सः भगवान् । दीनचेतसं पितरं स्ववक्त्रेन्दुविनिष्यन्दिसुधापूरितकुल्यया स्ववक्त्रेन्दोः विनिष्यन्दिन्यः विनिष्यन्दमानाः सुधाः सान्त्ववाक्यावयववर्णादयोऽभिसंहिताः तत्पूरितकुल्यारूपया वाचा सान्त्वयामास । 'कुल्याल्पा कृत्रिमा सरित्' इत्यमरः ॥ ८५ ॥

गम्भीरमधुरां तस्य गिरं निगमगन्धिनीम् ।
श्रुत्वा मुक्तिसखीं प्राप मुदमानकदुन्दुभिः ॥ ८६ ॥

गम्भीरेति । आनकदुन्दुभिः वसुदेवः । गम्भीराम् अगाधाम् । मधुरां श्रुतिसुखां च; खञ्जकुब्जवत् विशेषणसमासः । निगमगन्धिनीं वेदगन्धवतीम् अलङ्घ्या नियतिरित्यादिरूपेण वेदार्थस्पर्शवतीमिति यावत् । तस्य कृष्णस्य गिरं श्रुत्वा मुक्तिसखीं मुक्तिदशासंबन्धिनीम् । मुदं प्राप ॥ ८६ ॥

देवकी च परिष्वज्य सुतं वात्सल्यनिर्भरा ।
नन्दगोपवधूलब्धं नवमानन्दमन्वभूत् ॥ ८७ ॥

देवकीति । वात्सल्यनिर्भरा स्नेहपरिपूर्णा । देवकी च सुतं परिष्वज्य । नन्दगोपवध्वा यशोदया लब्धम् नवम् इदंप्रथमम् । आनन्दं पुत्रपरिष्वङ्गसुखम् । अन्वभूत् ॥ ८७ ॥

भूयः प्रादुरभूत्तस्य भुजयुग्मं तिरोहितम् ।
तथापि तादृशं मर्त्यं तममन्यन्त तामसाः ॥ ८८ ॥

**भूय इति।** तस्य कृष्णस्य तिरोहितं भुजयुग्मं भूयः प्रादुरभूत्; अनुकम्प्यानां स्वतत्त्वख्यापनार्थेति भावः। तथापि तामसाः तमोगुणाविष्टाः। तं कृष्णम्। तादृशं भुजचतुष्टयविशिष्टम्। मर्त्यममन्यन्त ॥

बभूव बलभद्रस्य तेन विश्वातिशायिना ।
शिरसा विधृतस्यापि किरीटस्येव शेषता ॥ ८९ ॥

**बभूवेति।** विश्वातिशायिना सर्वोत्तरेण तेन कृष्णेन। शिरसा विधृतस्यापि अग्रजतया बहूकृतस्यापि। बलभद्रस्य शेषता उपसर्जनता बभूव। किरीटस्येव; यथा किरीटस्य शिरसा धृतस्यापि अलंकार्यशेषता तद्वदित्यर्थः। शेषता अनन्ततेत्यपि गम्यते ॥ ८९ ॥

क्रियमाणपरिष्कारः किरीटाद्यैः स बन्धुरैः ।
तानि तान्येव दिव्यानि तत्तदङ्गैरभूषयत् ॥ ९० ॥

**क्रियमाणेति।** बन्धुरैः मनोज्ञैः। किरीटाद्यैराभरणैः क्रियमाणपरिष्कारः स कृष्णः। दिव्यान्यप्राकृतानि दिवि स्थितानि तानि तानि आभरणान्येव। तत्तदङ्गैः तत्तदाभरणयुक्तैस्तैस्तैरवयवैः। अभूषयत्; भगवदङ्गसंपर्कादाभरणान्येव शोभातिशयं प्राप्तानीत्यर्थः ॥ ९० ॥

अशोभत शुभं छत्रं तस्य राजन्यलक्षणम् ।
तन्नाभिपुण्डरीकस्य रूपान्तरमिवोदितम् ॥ ९१ ॥

**अशोभतेति।** तस्य कृष्णस्य। शुभं मनोज्ञम्। राजन्यलक्षणं

छत्रं राजचिह्नं श्वेतातपत्रम् । तन्नाभिपुण्डरीकस्य, उदितं प्रादुर्भूतम् । रूपान्तरम् आकारान्तरमिव । अशोभत । प्राक् चन्द्रोदयवर्णने भारतादिप्रसिद्ध्यनुरोधेन नाभीकमलस्यारुण्यमुक्तम् । इह तु 'नाभीपल्वलपुण्डरीकमुकुलः कम्बोः सपत्नीकृतः' इत्यादौ तस्य श्वेताम्बुजत्वप्रसिद्धेरपि दर्शनात् तथात्वमिति न विरोधः ॥ ९१ ॥

**चामरद्वितयं शौरेः समया मुखपङ्कजम् ।**
**शुशुभे सप्रतिच्छन्दो हंसमूर्तिरिव स्वयम् ॥ ९२ ॥**

**चामरेति ।** शौरेः मुखपङ्कजं समया मुखपङ्कजसमीपे 'अभितः-परितः—' इत्यादिना द्वितीया । चामरयोः द्वितयं सप्रतिच्छन्दः प्रतिबिम्बसहितः स्वयं हंसमूर्तिरिव साक्षात् हंसावतारो भगवानिव शुशुभे । भगवतो हंसावतारः कथितः ॥ ९२ ॥

**स चन्द्र इव संपूर्णः प्रथमो यदुभूभृताम् ।**
**पुनरुन्निद्रयामास कीर्त्तिं कुमुदिनीमिव ॥ ९३ ॥**

**स इति ।** यदुभूभृतां यदुवंश्यानां राज्ञाम् प्रथमः प्रवरः । चन्द्रपक्षे आदिमः । 'प्रथमौ प्रवरादिमौ' इति वैजयन्ती । अत एव संपूर्णः चन्द्र इव स्थितः । सः कृष्णः कीर्त्तिं कुमुदिनीमिव पुनरुन्निद्रयामास उन्मेषयति स्म । पुनःशब्दो ययातिशापेन यदुवंशकीर्त्तेः प्राक् निमग्नत्वं द्योतयति ॥ ९३ ॥

**अभजन्त द्विजेन्द्रास्तमतद्भोगपराङ्मुखाः ।**
**सर्गाधिकारान्निर्वाप्य शान्ता इव पितामहाः ॥ ९४ ॥**

**अभजन्तेति ।** द्विजेन्द्राः ब्राह्मणप्रवराः । तं कृष्णम् । अतद्भोगपराङ्मुखाः कृष्णव्यतिरिक्तस्य विषयस्य भोगे पराङ्मुखाः तदेकाभिरताः

सन्तः। सर्गाधिकारान्निर्वाप्य शान्ता उपरतकृत्याः पितामहाः ब्रह्माण इव अभजन्त; पौरोहित्याद्यवलम्बनेन प्राप्तवन्त इत्यर्थः। प्रतिकल्पं भिन्नभिन्नाः ब्रह्माणः तत्तत्कल्पसृष्टिं कृत्वा तत्तदवसाने विमुक्तसंसाराः भगवन्तमुपयन्तीति 'यावदधिकारमवस्थितिराधिकारिकाणाम्' इति सूत्रे निरूपितम्। मुच्यमाना अपि भगवदनुभवैकपरा इति अतद्भोगपराङ्मुखा इति विशेषणं तुल्यम्॥ ९४॥

अहार्यान्यदुवंशस्य स भोगान्समकल्पयत्।
स्वपर्यङ्कभुजंगस्य फणामणिगणानिव॥ ९५॥

अहार्यानिति। सः कृष्णः। यदुवंशस्य यदुभूभृद्गणस्य। अहार्यान् हर्तुमशक्यान् स्वपर्यङ्कभुजंगस्य शेषस्य फणामणिगणानिव स्थितान् भोगान्भोग्यान् रत्नाभरणादीन्। समकल्पयत् ददावित्यर्थः॥ ९५॥

अमरत्वाय पर्याप्तं तन्मुखेन्दुसमुद्भवम्।
सुधेव परिवारेभ्यः सस्वदे सूनृतं वचः॥ ९६॥

अमरत्वायेति। अमरत्वाय पर्याप्तम् अमर्त्यत्वं संपादयितुमनन्यापेक्षसाधनम्, तद्वचनश्रवणमात्रेण देववत् कृतार्थभावादिति भावः। तन्मुखेन्दुसमुद्भवं तस्य कृष्णस्य मुखमिन्दुरिव ततो जातम्। सूनृतं प्रियसत्यं वचः। सुधेव अमृतमिव। परिवारेभ्यः सस्वदे स्वदते स्म। 'रुच्यर्थानाम्—' इत्यादिना चतुर्थी॥ ९६॥

प्रार्थितोऽपि स राज्याय प्रभावज्ञैर्यदूत्तमैः।
अरोचयत राजानमुग्रसेनं वयोधिकम्॥ ९७॥

प्रार्थितोऽपीति। सः कृष्णः। प्रभावज्ञैः स्वस्य महिमानं जान-

द्भिः । यदूत्तमैः अक्रूरादिभिः । राज्याय प्रार्थितोऽपि । वयोधिकं यदूनां मध्ये वयसा अधिकम् । उग्रसेनं कंसस्य पितरम् । राजानमरोचयत अनिच्छन्तमेव राजानं कृतवानित्यर्थः ॥

न्यस्तरक्षाभरो राज्ञा यौवराज्यमुपाश्रितः ।
शुशुभे पारतन्त्र्येण स्वातन्त्र्यवशवर्तिना ॥९८॥

न्यस्तेति । राज्ञा उग्रसेनेन । न्यस्तरक्षाभरः निहितराज्यरक्षाभरः । यौवराज्यं युवराजत्वम् । उपाश्रितः कृष्णः । स्वातन्त्र्यवशवर्तिना स्वातन्त्र्याधीनेन स्वेच्छागृहीतेन । पारतन्त्र्येण उग्रसेनपराधीनतया शुशुभे ॥ ९८ ॥

तस्य गोपायतः पृथ्वीं गोपालकुहनात्यजः ।
पर्युपास्त पदं धन्या पार्थिवश्रीरनुत्तमा ॥ ९९ ॥

तस्येति । गोपालकुहनात्यजः गोपालकैतवं त्यक्तवतः । पृथ्वीं गोपायतः संरक्षतः तस्य कृष्णस्य । पदं चरणम् । अनुत्तमा स्वापेक्षया उत्तमरहिता धन्या सुकीर्तिनी । पार्थिवश्रीः राजलक्ष्मीः । पर्युपास्त उपासितवती ॥ ९९ ॥

कृतवीराभिषेकं तं क्लृप्तकल्याणकौतुकम् ।
तुष्टुवुः समये वेदाः सौस्नातिकपुरस्कृताः ॥ १०० ॥

कृतेति । कृतवीराभिषेकं गृहीतयौवराज्याभिषेकम् । क्लृप्तकल्याणकौतुकम् आबद्धमङ्गलहस्तसूत्रम् । तं कृष्णम् । समये प्राप्तकाले । सौस्नातिकपुरस्कृताः सुस्नातं पृच्छन्तीति सौस्नातिकाः 'पृच्छतौ सुस्नातादिभ्य उपसंख्यानम्' इति ठक् । तैः पुरस्कृताः वेदाः तुष्टुवुः

सौस्नातिकेषु ब्राह्मणेषु स्वयमपि तद्वेषमालम्ब्य वेदा भगवन्तमस्तुवन्नित्यर्थः ॥ १०० ॥

**शक्तिभिस्तिसृभिर्दीप्तो विवस्वानिव दीप्तिभिः ।**
**स्वपदं पृथिवीं चक्रे सुहृद्भिः सूरिभिर्वृतः ॥ १०१ ॥**

**शक्तिभिरिति** । तिसृभिः अमृताचन्द्राशुक्राख्याभिः वृष्टिभिः घर्मसर्जनीभिः पुराणोक्ताभिः दीप्तिभिः प्रभाभिः विवस्वानिव तिसृभिः शक्तिभिः शास्त्रोक्ताभिः 'उत्साहप्रभुमन्त्रशक्तिभिः । दीप्तः उज्ज्वलः । सुहृद्भिः स्निग्धैरमात्यादिभिः सूरिभिर्विद्वद्भिश्च । वृतः परिवृतः कृष्णः । पृथिवीं स्वपदं स्वस्थानं चक्रे कृत्स्नां भुवं स्ववशीचकारेत्यर्थः । स्वपदमित्यनेन परमपदरूपतापि प्रतीयते । तत्र पक्षे तिसृभिः शक्तिभिः श्रीभूनीलाभिः सुहृद्भिः रजस्तमोनिरासेन शोभनहृदयैः सूरिभिः नित्यसूरिभिः । वृतः सेवितः इति योज्यम् । 'वृङ् संभक्तौ' इति धातुः ॥ १०२ ॥

**विकॢप्तं तस्य बर्हाग्रं हेमरत्नविभूषणैः ।**
**वैरोचनिहृतानीतः किरीटो न व्यकल्पत ॥ १०२ ॥**

**विकॢप्तमिति** । तस्य कृष्णस्य । बर्हाग्रं पिञ्छमालादिकम् । हेमरत्नविभूषणैः विकॢप्तं प्राप्तविकल्पमभूत् । पिञ्छमालादिस्थाने दिव्याभरणान्यभूवन्नित्यर्थः । वैरोचनिहृतानीतः विरोचनस्यापत्येन बलिना हृतः ततो गरुडेन प्रत्यानीतश्च किरीटो न व्यकल्पत न तद्विकल्पितोऽभूत् राजभावेऽपि स एवासीदित्यर्थः ॥ १०२ ॥

**मन्त्रिभिः सैन्यसुग्रीवमेघपुष्पबलाहकैः ।**
**व्यक्तिमन्तोऽभवन्वेदास्त्यजन्तो धेनुभूमिकाम् ॥**

सप्तिभिरिति । वेदाः धेनुभूमिकां वृन्दावनगृहीतधेनुवेषम् । त्यजन्तः सैन्यसुग्रीवमेघपुष्पवलाहकैः सैन्यसुग्रीवमेघपुष्पवलाहकसंज्ञितैः । सप्तिभिः तुरगैः व्याक्रमन्तः प्रादुर्भाववन्तः अभवन् । चत्वारोऽपि वेदा रथ्याश्वचतुष्टयरूपेण प्रादुर्भूता इत्यर्थः ॥ १०३ ॥

पद्माकमलदायादं पदं तस्य स्वमौलिभिः ।
श्रुतयो धारयामासुः पादपीठीकृतात्मभिः ॥ १०४ ॥

पद्मेति । पद्मायाः लक्ष्म्याः कमलं लीलापद्मं तस्य दायादं बान्धवं सदृशमिति यावत् । तस्य कृष्णस्य पदं श्रुतयो वेदाः पादपीठीकृतात्मभिः पादपीठीकृतस्वरूपैः स्वमौलिभिः स्वशीर्षैः धारयामासुः । 'धृ धारणे' इति चौरादिको धातुः ॥ १०४ ॥

स वेणुः शङ्खरूपेण प्राचा परिपचेलिमः ।
अगोपीसंविभागार्हं पपौ तस्याधरामृतम् ॥ १०५ ॥

स इति । स वेणुः; यं वृन्दावने दध्माविति भावः । प्राचा प्राचीनेन शङ्खरूपेण शङ्खात्मना । परिपचेलिमः स्वयमेव परिपक्वः सन् । 'केलिमर उपसंख्यानम्' इति कर्मकर्तरि केलिमर् प्रत्ययः । अगोपीसंविभागार्हं प्राग्वेणुतादशायामिव गोपीभिः संविभागानर्हम् । तस्य कृष्णस्य । अधरामृतं पपौ ॥ १०५ ॥

दिदेश सांदीपनये धनुर्वेदोपदेशिने ।
स्वपदारूढतनयप्रत्यानयनदक्षिणाम् ॥ १०६ ॥

दिदेशेति । धनुर्वेदोपदेशिने स्वस्य धनुर्वेदमुपदिष्टवते । सांदीपनये महर्षये । स्वस्य पदं परं पदम् आरूढस्य तत्सुतस्य प्रत्यानयनमेव

दक्षिणां गुरुदक्षिणाम् । दिदेश दत्तवान् ॥ १०६ ॥

प्रहितां पुरुहूतेन स्वसंकल्पानुवर्तिना ।
कंसजित्कंसपितरं सुधर्मामध्यवासयत् ॥१०७॥

**प्रहितामिति ।** कंसजित् कृष्णः । स्वसंकल्पानुवर्तिना स्वेच्छानुवर्तनशीलेन । पुरुहूतेन इन्द्रेण । प्रहितां सुधर्मां देवसभाम् । कंसपितरम् उग्रसेनम् । अध्यवासयत् अधिवासयति स्म । 'उपान्वध्याङ्वसः' इति आधारस्य सुधर्मायाः कर्मता । कंसपितरमिति द्विकर्मकता तु दुह्यादौ गत्यादिसूत्रे च परिगणनाभावेऽपि महाकविप्रयोगादादर्तव्या ॥ १०७ ॥

अशेषरत्नचित्रां तामतीतस्तुतिगोचराम् ।
अद्वैतमिव सर्वेषामद्भुतानाममन्यत ॥ १०८ ॥

**अशेषेति ।** अशेषरत्नचित्राम् अखिलरत्नकर्बुराम् । अतीतस्तुतिगोचराम् अतिक्रान्तस्तुतिविषयभावाम् । तां सुधर्माम् । सर्वेषामद्भुतानाम् अद्वैतम् एकीभावमिव अमन्यत ॥ १०८ ॥

स च तस्यानुभावेन निध्यातनयपद्धतिः ।
प्रजापालनधर्मस्य पारदृश्वतमोऽभवत् ॥ १०९ ॥

**स चेति ।** तस्य कृष्णस्यानुभावेन महिम्ना । निध्यातनयपद्धतिः दृष्टनीतिमार्गः । स च उग्रसेनश्च । प्रजापालनधर्मस्य प्रजापालनाख्यस्य राजधर्मस्य । पारदृश्वतमः अतिशयेन पारदृश्वा । अभवत् ॥ १०९ ॥

कृष्णपक्षमपि प्राप्य स राजा विश्वरञ्जकः ।
प्रापद्यत परां वृद्धिं सुमनःस्वादनक्षमाम् ॥

**कृष्णेति** । सः राजा उग्रसेनश्चन्द्रश्च । कृष्णपक्षं कृष्णबलं प्राप्य । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति यादवः । अपिशब्दः अपरपक्षमर्थमादाय विरोधालंकारद्योतनार्थः । विश्वरञ्जकः विश्वस्य वशीकरणः, चन्द्रपक्षे उदयरागापादकः इत्यर्थः । सुमनःस्वादनक्षमां विदुषामानन्दाश्रयणस्य उचिताम्, पक्षे देवानामास्वादनस्य उचिताम् । परामुत्कृष्टाम् । वृद्धिं प्राप अपद्यत ॥ ११० ॥

मलिनैः सततासारैर्मन्त्रिभिश्चपलान्वितैः ।
विमुक्तः स बभौ भास्वान्मेघैरिव जलाश्रयैः ॥

**मलिनैरिति** । भास्वान् तेजस्वी सूर्यश्च । 'भास्वान् भासुरसूर्ययोः' इति विश्वः । सः उग्रसेनः । मलिनैः दुष्टचरितैः । सततासारैः सदा असारैः बलरहितैः । चपलान्वितैः अविमृश्यकारिजनसंसर्गिभिः । जलाश्रयैः अनभिज्ञजनानामाश्रयैः । मन्त्रिभिः मेघैरिव विमुक्तः सन् बभौ । यथा सूर्यः मलिनैः कृष्णवर्णैः सततासारैः संततधारासंपातैः । चपलाभिर्विद्युद्भिः अन्वितैः । जलस्य सलिलस्याश्रयैः मेघैर्मुक्तो भवति तद्वदिति भावः । 'धारासंपात आसारः' इत्यमरः ॥ १११ ॥

प्रचितं बहुभिस्तीर्थैस्तस्य गूढं चिकीर्षितम् ।
सारस्वतमिव स्रोतः स्थाने स्थाने व्यजृम्भत ॥

**प्रचितमिति** । तस्य उग्रसेनस्य । बहुभिः तीर्थैः मन्त्रचारप्रस्थापनादिभिः । प्रचितम् उपचितम् । गूढम् अनन्यवेद्यम् । चिकीर्षितं कर्तुमिष्टं शत्रुजयादिकम् । सारस्वतं स्रोत इव स्थाने स्थाने उचितस्थानेषु कार्यकालेषु व्यजृम्भत प्रकाशमभूत् । कार्यनिर्वृत्तिपर्यन्तं गूढमेवासीदित्यर्थः । यथा बहुभिस्तीर्थैः अवतरणमार्गैः प्रचितं गूढम् अन्तःप्रवाहरूपं सरस्वतीनदीस्रोतः स्थानविशेषेषु प्रकटीभवति तद्वदित्यर्थः ।

'तीर्थं मन्त्राद्युपाध्यायशास्त्रेष्वम्भसि पावने। पात्रोपाध्यायवतारेषु स्त्रीपुष्पे योनिमन्त्रयोः' इति विश्वः ॥ ११२ ॥

**मानसंरक्षकस्तस्य मन्त्रस्तर्क इवानयः।**
**अङ्गपञ्चकसंपत्त्या विपक्षे दण्डतां ययौ ॥११३॥**

**मानेति**। तस्य राज्ञः। मानसंरक्षकः मन्यते विचिन्त्यते इति मानः तस्य चिन्तितार्थस्य स्वरूपसंपादनस्थायित्वापादनादिना सम्यक् रक्षकः। मन्त्रः। अङ्गपञ्चकसंपत्त्या कर्मणामारम्भोपायः पुरुषद्रव्यसंपत्तिः देशकालविभागः विनिपातप्रतीकारः कार्यसिद्धिश्चेति मन्त्राङ्गपञ्चकस्य संपत्त्या। विपक्षे शत्रुवर्गे। दण्डतां बाधकताम्। ययौ। आनयति प्रापयत्यभिमतसाध्यमित्यानयः साध्यसिद्ध्यनुकूलस्तर्क इव। सोऽपि मानस्य अनुमानादेः प्रमाणस्य संरक्षकः 'प्राप्तिस्तर्कप्रतिहतिरवसानं विपर्यये। अनष्टानुकूलत्व इति तर्काङ्गपञ्चकम्' इत्युक्तरूपतर्काङ्गपञ्चकसंपत्त्या विपक्षे स्थापनापदि उक्तसाध्यानङ्गीकारपक्षे बाधकश्चेति भावः ॥ ११३ ॥

**स्वतः शुद्धां यथास्थानं रोषरागवतीं धियम्।**
**स दधे यमुनाशोणशबलामिव जाह्नवीम् ॥११४॥**

**स्वत इति**। स राजा। स्वतः शुद्धां स्वभावतो दोषाद्यसंवृताम्। यथास्थानं रोषरागवतीम् उचितविषयानतिक्रमेण कोपप्रसादयुक्ताम्। अत एव स्वतः शुद्धां शुभ्राम्। यमुनाशोणाभ्यां शबलां नानावर्णाम्। जाह्नवीमिव स्थितां धियं दधे धत्ते स्म। रोषरागौ नीलारुणत्वेन कविसमयप्रसिद्धौ ॥ ११४ ॥

**सप्तभिः सामदानाद्यैरुपायैः स्थानपातिभिः।**
**द्विनवद्वीपसंभूतं रत्नजातमजीहरत् ॥ ११५ ॥**

सप्तभिरिति । स्थानपातिभिः उचितविषयेषु पतनशीलैः । 'सामभेदश्च दानं च दण्डश्चेति चतुष्टयम् । मायोपेक्षेन्द्रजालं च सप्तोपायाः प्रकीर्तिताः' इत्युक्तरूपैः सप्तभिरुपायैः । द्विनवद्वीपसंभूतः द्वे नवसंख्ये येषु ते द्विनवानः अष्टादशसंख्याकाः, तेषु द्वीपेषु जातम् । रत्नजातम् उत्तमवस्तुसमूहम् । अजीहरत् हरति स्म ॥ ११५ ॥

अनुगन्ता स्वनेतॄणामुदये विश्वरञ्जकः ।
दूरीकृततमाः सोऽभूद्द्वितीय इव भानुमान् ॥

अनुगन्तेति । स्वनेतॄणां स्वस्य नियन्तॄणां वृद्धानामनुगन्ता अनुसर्ता । उदये अभ्युदये सति विश्वरञ्जकः जगद्वशीकरणः । दूरीकृततमाः निरस्ततमोगुणः । स राजा द्वितीयो भानुमानिवाभूत् । भानुमानपि स्वनेतॄणां स्वस्य नयनं कुर्वतां वालखिल्यादीनां पश्चादागन्ता । उदयसमये विश्वस्य रागापादकः दूरीकृतान्धकारश्चेति भावः । रविनेतृविषये कूर्मपुराणवचनम्— 'ग्रामणीयक्षभूतानि कुर्वतेऽभीशुसंग्रहम् । वालखिल्या नयन्त्येनं परिवार्योदयद्रविम्' इति ॥ ११६ ॥

संचितस्य धनौघस्य स्थानसंचारणेन सः ।
तटाकस्येव पूर्णस्य परीवाहमकल्पयत् ॥ ११७ ॥

संचितस्येति । सः राजा संचितस्य उपार्जितस्य धनौघस्य पूर्णस्य तटाकस्येव स्थानसंचारणेन उचितस्थानेषु सत्पात्रेषु प्रदानेन परीवाहमकल्पयत् । यथा पूर्णस्य तटाकस्य रक्षार्थं केदारेषु संचारणेन परीवाहं कल्पयन्ति तद्वदित्यर्थः । 'जलोच्छ्वासाः परीवाहाः' इत्यमरः ॥

आसागरान्तमन्वपुत्य महीपतीन्द्रा-
न्भूम्ना निजेन परिहृत्य ययातिशापम् ।

ओजोनिरोधकमिळाश्रयमुग्रसेनं
राजानमेकमकरोज्जगदेकनाथः ॥ ११८ ॥

आसागरान्तमिति। जगतामेको नाथः कृष्णः। आसागरान्तं सागरसमीपपर्यन्तं महीपतीन्द्रान् अवमत्य निजेन भूम्नी महिम्ना ययातिशापं देवयानीवंश्यो राज्यानर्होऽस्त्विति ययातेः शापम्। परिहृत्य निरस्य। ओजोनिरोधकं शत्रुबलप्रतिबन्धकम्, अत एव इलायाः आश्रयम् उग्रसेनम्। एकं भूमण्डलस्य मुख्यं राजानमकरोत्। वसन्ततिलकावृत्तम्। 'उक्ता वसन्ततिलका तभजा जगौ गः' इति लक्षणात्॥

क्षिप्तावद्यं क्षत्रियवृत्त्या बहुशाखं
मग्नं शापोदन्वति मान्यं यदुवंशम्।
इच्छाधीनस्वेतरसर्वः स्वमहिम्ना
रक्षागोपो रामयवीयानुदहार्षीत् ॥ ११९ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु यादवाभ्युदये
दशमः सर्गः॥

क्षिप्तेति। इच्छाधीनस्वेतरसर्वः स्वसंकल्पवशवर्तिस्वेतरसकलभूतः। रक्षागोपः जगद्रक्षणार्थं गोपभूमिकामाश्रित्य स्थितः। रामस्य यवीयान् कृष्णः। शापोदन्वति ययातिशापसमुद्रे मग्नं मान्यं जगत्पूज्यं बहुशाखं बहुसंतानं यदुवंशं क्षत्रियवृत्त्या क्षिप्तावद्यं निरस्तदोषं कृत्वेति शेषः। स्वमहिम्ना उदहार्षीत् उद्धरति स्म। प्राक् प्रायो वसुदेवादीनां पाशुपाल्यादिरूपवैश्यप्रदिवृत्त्युपजीवनेन स्थितानां क्षत्रियवृत्तिसंपादनेन वंशो-

द्धारः कृत इत्यर्थः । मत्तमयूरवृत्तम् । 'वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम्' इति लक्षणात् ॥ ११९ ॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीविश्वजिद्याजि-
श्रीरङ्गराजाध्वरिवरसूनुना अप्पय्यदीक्षितेन कृते
यादवाभ्युदयव्याख्याने
दशमः सर्गः ॥



## एकादशः सर्गः ॥



एवं कंसनिग्रहपर्यन्तां भगवतो बालक्रीडां वर्णयित्वा जरासंधयुद्धादिरूपां तदनन्तरक्रीडां वर्णयितुमारभते—

तदद्भुतं क्रीडितकं क्रमेण
श्रुत्वा हरेरप्रतिमानशक्तेः ।
महाबलान्कंसवधादिजन्मा
मन्युः प्रपेदे मगधेन्द्रमुख्यान् ॥ १ ॥

**तदिति** । अप्रतिमानशक्तेरनुपमसामर्थ्यस्य हरेरद्भुतमाश्चर्यं क्रमेण क्रीडितकं तत्तत्क्रीडोचितवयःक्रमं विनैव गोवर्धनोद्धरणगोपीजनोपभोगकंसनिग्रहरूपां बालक्रीडां श्रुत्वा महाबलान् महासत्त्वान्। मगधेन्द्रमुख्यान् मगधदेशाधिपतिः जरासंधः तत्प्रभृतीन् राज्ञः कंसवधादिजन्मा मन्युः कोपः प्रपेदे । जरासंधादिकर्तृकस्यापि श्रवणस्य मन्युकर्तृकत्वारोपेण श्रुत्वेति क्त्वाप्रत्यय इति समानकर्तृकत्वोपपत्तिः। श्रुत्वा स्थितानिति वा शेषोऽध्याहार्यः । कंसवधादिना जन्म यस्येति व्यधिकरणबहुव्रीहिः। 'व्यधिकरणो जन्माद्युत्तरपदः' इति वामनोक्तेः । उपजातिवृत्तम् । 'स्यादिन्द्रवज्रा यदि तौ जगौ गः, उपेन्द्रवज्राजतजास्ततो गौ' 'अनन्तरोदीरितलक्ष्मभाजः पादा यदीया उपजातयस्ताः' इति लक्षणात् ॥ १ ॥

गोपालडिम्भो नरपालहन्ता
कुले यदोरश्चितमातपत्रम् ।

अन्यच्च भूम्यामधरोत्तरत्वं
हन्तेति वादान्प्रभुरभ्यनन्दत् ॥ २ ॥

**गोपालेति** । गोपालडिम्भः वल्लवशिशुः नरपालकस्य कंसस्य हन्ता यदोः पितृशापात् राज्यभ्रष्टस्य कुले अचितं पूजितमातपत्रं श्वेतच्छत्रं भूम्यामन्यच्च अधरोत्तरत्वम् अधरस्योत्तरता कृष्णस्य परदारनिरतत्वेऽपि लोकसंमतमिति हृदयम् । हन्त विषाद इति वादान् जरासंधादिवचनानि प्रभुः कृष्णः अभ्यनन्दत् । तेषामसहिष्णुतया युद्धोद्योगेन भूभारावतरणं भविष्यतीत्याशयेनेति भावः । नरपालहन्तेति समासोपपत्तिः प्रागेव तत्र तत्र दर्शिता ॥ २ ॥

हलादिभिर्हेतिवरैर्यथार्हं
रथाङ्गमुख्यैरपि रामकृष्णौ ।
स्ववृत्तियोग्यावसरोपयातैः
प्राचीं श्रियं प्रादुरभावयेताम् ॥ ३ ॥

**हलादिभिरिति** । रामकृष्णौ यथार्हं यथोचितं हलादिभिः सौनन्दसंवर्तकाख्यहलमुसलप्रभृतिभिः । रथाङ्गमुख्यैः चक्रशार्ङ्गगदादिभिरपि स्ववृत्तियोग्यावसरोपयातैः स्वेषां हलप्रभृतीनां वृत्तेः वर्तनस्य योग्ये अवसरे गोपभूमिकां विहाय राज्यपालनाधिकृतत्वसमये उपयातैः हेतिवरैरस्त्रप्रवरैः प्राचीं प्राक्तनीं शेषशायिमूर्त्यां स्थितां श्रियं शोभां प्रादुरभावयेतां प्रादुर्भूतामकुरुताम् । भवतेर्ण्यन्तादात्मनेपदम् । यद्यपि रामस्य हलं मुसलं चेति हेतिद्वयमेव प्रसिद्धम्, तथापि 'एष ते रथ आयात आयातान्यायुधानि च' इति भागवते तद्बहुत्वोक्तेः हलादिभिरिति बहुवचनं कृतम् ॥ ३ ॥

स दैत्यजिद्वध्यवरूथिनीनां
संप्रापकं सारथिमात्रशेषम् ।
पुनः प्रवृत्तानुशयः पुरीं स्वां
निन्ये जरासंधमहार्यसंधः ॥ ४ ॥

**स इति** । अहार्या केनापि हर्तुमशक्या संधा प्रतिज्ञा यस्य । 'संधा प्रतिज्ञा मर्यादा' इत्यमरः । स दैत्यजित् कृष्णः । वध्यवरूथिनीनां भूभारावतरणाय हन्तव्यानां सेनानाम् । संप्रापकं प्राप्तिहेतुम् । सारथिमात्रशेषं कृत्स्नेन तत्सेनाहननेन यन्तृमात्रावशेषम् । पुनः प्रवृत्तानुशयः पश्चादज्ञानात् कृष्णस्योपरि समागतमिति संजातपश्चात्तापं च । 'भवेदनुशयो द्वेषे पश्चात्तापानुसंधयोः' इति विश्वः । एवंभूतं जरासंधं स्वां पुरीं निन्ये प्रापयामास । 'अकथितं च' इति द्विकर्मकता । इदानीमयं मुक्तश्चेत् पुनरपि सेनान्तरं संमेल्यागमिष्यतीति मत्वा तस्य प्राणरक्षणाय पश्चात्तापमभ्युत्पाद्य मुक्तवानित्यर्थः ॥ ४ ॥

समाहृतैः सैन्यमहासमुद्रै-
रायातमष्टादश सांपरायान् ।
देहावशेषं प्रजिघाय दीनं
देहेन भीमेन विभेत्तुमिच्छन् ॥ ५ ॥

**समाहृतैरिति** । समाहृतैः संमिलितैः सैन्यमहासमुद्रैः सेनाभिः महाब्धितुल्याभिः सह अष्टादश सांपरायान् अष्टादशसंख्यानि युद्धानि । 'सांपरायस्तु संग्राम आपगागामिकालयोः' इति वैजयन्ती । आयातं प्राप्तवन्तम् अष्टादशवारं कृतयुद्धमित्यर्थः । देहावशेषं सर्वस्या अपि सेनायाः हननेन देहमात्रावशेषम्, अत एव दीनं कातरं दरिद्रं वा ।

जरासंधं भीमेन भीमसेनरूपेण देहेन विभंक्तुं पाटयितुमिच्छन् सन् प्रजिघाय प्रहिणोति स्म । भीमरूपेणाप्यन्तर्यामी भगवानेव तस्य हन्तेति भावः ॥ ५ ॥

स्वदत्तशक्त्या मुचुकुन्ददृष्ट्या
भस्मावशेषो भविता द्रुतं यः ।
कलेरिवात्मानमनन्तदोषं
यं कालपूर्वं यवनं प्रचख्युः ॥ ६ ॥

**स्वदत्तेति** । स्वेन कृष्णेन दत्तशक्त्या दत्तसामर्थ्यया मुचुकुन्द-दृष्ट्या मान्धातृपुत्रस्य राज्ञः दृष्ट्या द्रुतं शीघ्रं यः भस्मावशेषः भविता भविष्यतीति भवतेर्लुट् । अनन्तदोषमनवधिकावद्यम् । अत एव कलेः कलियुगस्य आत्मानं स्वरूपमिव स्थितं यं कालपूर्वं यवनं प्रचख्युः नाम्ना कालयवनं प्रचख्युः । तदागम इति तृतीयश्लोकेनान्वयः । यद्यपि कालशब्दपूर्वत्वं यवनशब्दस्यैव नार्थस्य, तथापि शब्दवृत्तेः शब्दस्यार्थे उपचारात् प्रयोगः । पुरा देवासुरसंग्रामे चिरं देवानां कृतसाहाय्यको मुचुकुन्दः श्रमापनोदाय बहुकालं निद्रामभिलष्य 'प्रसुप्तं बोधयेद्यो मां तं दहेयमहं सुराः । चक्षुषा क्रोधदीप्तेन' इति वरं वृत्वा देवैः तथा-नुज्ञातः क्वचित् पर्वतगुहायां शिश्ये । ततः कालेन कालयवने यदुभिर-वध्ये समुत्पन्ने तं छलेन जिघांसुः कृष्णः उपायेन मुचुकुन्दगुहां प्रापय्य तेन मुचुकुन्दे कृष्णभ्रान्त्या पादताडनेन प्रबोधितो मुचुकु-न्दो दृष्ट्या तं दाहयामासेति पौराणिकी कथा । तत्र देवैर्दत्तापि दाहशक्तिः तदन्तर्यामिकृतेति स्वदत्तशक्त्येत्युक्तम् ॥ ६ ॥

बलस्य च स्वस्य च बाहुभूम्ना
यदाहृतम्लेच्छमृगाधिपानाम् ।

सहस्रकोटीगुणितं सहस्रं
पञ्चत्वमायास्यति पञ्चसंख्यम् ॥ ७ ॥

**बलस्येति** । बलस्य बलदेवस्य च स्वस्य कृष्णस्य च बाहुभूम्ना बाहुमहिम्ना यदाहृतम्लेच्छमृगाधिपानां येन कालयवनेन आहृताः म्लेच्छशकतुरुष्कादिम्लेच्छदेशाधिपतय एव मृगाधिपाः सिंहाः मृगाधिपा इवेत्युपमितसमासो वा । तेषां पञ्चसंख्यं सहस्रकोटीगुणितं सहस्रं सहस्रकोटीगुणितं क्रियते चेत् सहस्रादुत्तरोत्तरं दशगुणमेकादशस्थानं भवति । तच्च पद्ममुच्यते । तदुक्तं वैजयन्त्याम् । परे दशगुणोत्तरा इत्युपक्रम्य 'शतं सहस्रमयुतं नियुतं प्रयुतार्बुदे । न्यर्बुदं बृन्दखर्वे च शङ्खं पद्मं महाम्बुजम् । समुद्रो मध्यमन्तं च परार्धं च यथाक्रमम्' इति । ततः पञ्चसंख्यया वर्धते चेत् पद्मपञ्चकं भवतीति । तत्पञ्चत्वमायास्यति नाशं प्रापयति ॥ ७ ॥

तदागमे यादवपुंगवानां
विप्रावमानोपनतं विषादम् ।
निवारयामास न वासुदेवः
प्रख्यापयन्ब्राह्ममृषेः प्रभावम् ॥ ८ ॥

**तदागम इति** । तस्य कालयवनस्य युद्धार्थमागमने यादवपुंगवानां यादवश्रेष्ठानां विप्रावमानोपनतं विप्रस्य गार्ग्यस्यावमाननेनागतं विषादं व्यसनं वासुदेवः कृष्णः । व्यसननिवारणशक्तोऽपीति भावः । ब्राह्मं ब्रह्मणस्तपस आगतम् । 'वेदस्तत्त्वं तपो ब्रह्म' इत्यमरः । 'तत आगतः' इत्यण् प्रत्ययः । 'नस्तद्धिते' इति टिलोपः । ऋषेः गार्ग्यस्य प्रभावं प्रख्यापयन् सन् न निवारयामास । पुरा किल गार्ग्यः यदूनां पुरोधाः दारपरिग्रहं

त्यक्त्वा ब्रह्मचर्येण कालं यापयन् यदूनां सदसि षण्ड इति केनचिदभिशस्तिश्रवणात् यदुषु कृतहासेषु प्रकुप्य ततो निर्गत्य द्वादशाब्दं तपश्चर्यया शंकरमाराध्य यदूनां भयावहं तैरवध्यं पुत्रं वरं लेभे । इदं च यवनदेशाधिपतिरनपत्यः श्रुत्वा तमायान्तं प्रत्युद्गम्य तदुत्पन्नं पुत्रमन्तःपुरे पोषयामास । स कालयवन इति पौराणिकी कथा । ततश्च नातः परं विप्रावमानः कार्य इति शिक्षयितुमृषेः तपोबलख्यापनाय तत्प्रयुक्तविषादनिवारणशक्तोऽप्यनिवार्य स्वयमपि विषादमभिनीय तस्थावित्यर्थः ॥ ८ ॥

निसर्गनिध्येयपरावरः स
संमन्त्र्य सार्धं यदुवंशवृद्धैः ।
विहातुमिच्छन्मधुरां शुभंयुः
संकल्पयामास पुरीं तदन्याम् ॥ ९ ॥

**निसर्गेति** । शुभंयुः शुभान्वितः निसर्गनिध्येयपरावरः स्वतोऽवलोकितभूतभाविवृत्तान्तः तथाभूतोऽप्यसौ यदुवंशवृद्धैः सार्धं संमन्त्र्य तेषु गौरवाधानायेति भावः । मधुरां विहातुं त्यक्तुमिच्छन् तदन्यां पुरीं संकल्पयामास निर्मापयितुं संकल्पितवान् ॥ ९ ॥

अन्यपुरीसंकल्पस्य प्रयोजनं दर्शयति—

स्वयंप्रवृत्तैरपि वृष्णिवीरै-
स्त्रातुं क्षमां त्रासितदैत्यलोकः ।
अनन्यसाधारणशक्तिरन्यां
संकल्पयामास पुरीमपूर्वाम् ॥ १० ॥

**स्वयमिति** । त्रासितदैत्यलोकः उद्वेजितासुरजनः अनन्यसाधा-

रणशक्तिः अनितरसाधारणसामर्थ्यः कृष्णः स्वयं प्रवृत्तैरपि कृष्णमनपेक्ष्य स्वयमेव त्रातुं प्रवृत्तैरपि वृष्णिवीरैः वृष्णिश्रेष्ठैः सात्यकिप्रभृतिभिः त्रातुं क्षमां रक्षितुं योग्याम् अन्यामपूर्वां नवीनां पुरीं संकल्पयामास । जरासंधकालयवनयोरेकेन युद्धार्थं स्वस्मिन् प्रवृत्ते तदन्यः पुरीं यथा नाक्रामति तथा तत्रत्यैः यदुभिरेव पालयितुं शक्यां समुद्रमध्यगतां पुरीम् । संकल्पितवानित्यर्थः ॥ १० ॥

जहौ धरित्रीमिव जामदग्न्यः
कौलीमयोध्यामिव कोसलेन्द्रः ।
अचिन्त्यवृत्तिर्मधुरामनिन्द्यां
तज्जन्मजातो महिमा तु नैनाम् ॥ ११ ॥

**जहाविति ।** अचिन्त्यवृत्तिरतर्कणीयचरितः कृष्णः । जामदग्न्यः परशुरामः निखिलक्षत्रियविजयलब्धां भूमिमिव कोसलेन्द्रः श्रीरामचन्द्रः कौलीं कुलसंबन्धिनीं कुलक्रमागतामयोध्यामिव अनिन्द्यामगर्ह्यां मधुरां जहौ तत्याज । तज्जन्मजातः तस्य कृष्णस्य जन्मना जातः महिमा तु एनां मधुरां न जहौ । तस्मिन् त्यक्तवत्यपि तस्य जन्मभूमिरिति पुण्यक्षेत्रत्वं तथैव स्थितमित्यर्थः । जहौ धरित्रीमित्यत्र 'सर्वानष्टादश द्वीपान् वशमानीय भार्गवः । सोऽश्वमेधसहस्राणि नरमेधशतानि च । इष्ट्वा सागरपर्यन्तां काश्यपाय महीं ददौ' इति भारतकथानुसंधेया । रघुनाथस्य पितृवाक्यपरिपालनार्थम् अयोध्यात्यागस्तु प्रसिद्धः । जामदग्न इति पाठे 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यण्प्रत्ययः । जामदग्न्य इति पाठे अनन्तरापत्येऽपि गोत्ररूपाध्यारोपेण 'गर्गादिभ्यो यञ्' इति गोत्रप्रत्ययः ॥

परित्यजन्नप्यभिमत्य तिष्ठ-
न्व्याप्तः शुभं व्यक्तिपदं तदग्र्यम् ।

अनन्यभाजामभजत्स देव-
स्तस्मिन्सतां प्रागिव संनिधानम् ॥ १२ ॥

परित्यजन्निति । शुभं प्राणिनां श्रेयस्करम् अम्यं प्रधानं तत् प्रकृतं व्यक्तिपदं स्वसंनिधानस्थानं मधुरां परित्यजन् अभिमत्य स्वक्षेत्राभिमानं कृत्वा व्याप्तः तिष्ठन् अदृश्यरूपेण व्याप्य वर्तमानः स देवः कृष्णः अनन्यभाजामैकान्त्यवतां सतां ब्रह्मविदां तस्मिन् क्षेत्रे प्रागिव संनिधानमभजत् पूर्ववत् कृष्णमूर्त्यैव संनिहित आसीत् ॥ १२ ॥

अहंसपद्मामिव वाहिनीं तां
वीतेन्दुतारामिव वासतेयीम् ।
समाप्तकार्यामिव सत्रशालां
शून्यां पुरीं प्रेक्ष्य जगाम शौरिः ॥ १३ ॥

अहंसपद्मामिति । हंसपद्मरहितां वाहिनीं नदीमिव । वीतेन्दुतारामपगतचन्द्रनक्षत्राम् । वासतेयीं रात्रिमिव । 'वसतिर्वासतेयी च श्यामा रात्री च कथ्यते' इति हलायुधः । समाप्तकार्यां समाप्तसवनकृत्यां सत्रशालां यज्ञशालामिव । 'सत्रमाच्छादने यज्ञे सदा दाने वनेऽपि च' इत्यमरः । शून्यां शोभारहितां पुरीं प्रेक्ष्य जगाम ॥ १३ ॥

चित्रावशेषद्विरदाश्वयोधा
शुकादिसंभाषणशेषसूक्ता ।
मणिप्रभाशेषितदीपिका सा
नाम्नैव माधुर्यवती तदासीत् ॥ १४ ॥

चित्रेति । चित्रावशेषद्विरदाश्वयोधा अवशिष्यत इत्यवशेषः चित्रं

द्विरदाद्यालेख्यमेवावशेषः यस्मिन् तथाभूतं द्विरदाक्षयोधं यस्याम्। एवं शुकादिसंभाषणशेषं सूक्तं यस्याम्। मणिप्रभैव शेषिता अवशेषीकृता दीपिका यस्यां सा मधुरा नाम्नैव माधुर्यवत्यासीत्। अर्थतस्तु माधुर्यहीना सौन्दर्यहीनाभूदित्यर्थः॥ १४॥

प्राचीनमादृत्य निवासभूमिं
प्रत्यङ्मुखीं पद्धतिमाददाना।
स्थिरं पदं प्राप्तुमियेष सेना
सत्त्वाधिका धीरिव सात्त्वतानाम्॥ १५॥

**प्राचीमिति**। प्राचीं प्राग्देशरूपां निवासभूमिमनादृत्य प्रत्यङ्मुखीं पश्चिमाभिमुखीं पद्धतिं सरणिमाददाना स्वीकुर्वती सत्त्वाधिका बलाढ्या सेना कृष्णचमूः सत्त्वाधिका सत्त्वगुणप्रचुरा अत एव प्राचीं निवासभूमिं प्राक्तनं बहिर्विषयलक्षणमास्पदमनादृत्य प्रत्यङ्मुखीं प्रत्यगात्माभिमुखीम्। पद्धतिमाददाना सात्त्वतानां सात्त्वतं भगवच्छास्त्रम् अधीयते विदुर्वेति सात्त्वताः। 'तदधीते तद्वेद' इति। प्राग्दीव्यतीयोऽण् प्रत्ययः। तेषां धीरिव स्थिरं पदं परैरनाधृष्यं कदाप्यचलं पदम्, धीपक्षे पुनरावृत्तिरहितं परं पदं तत् प्राप्तुमियेष॥ १५॥

उत्सारयन्धूलिमिवाग्रयायी
विनिर्दिशन्वासमिवगतिदूरात्।
प्रत्युद्गमाय त्वरयन्निवाब्धि
मरुद्ववौ मन्दविधूतकेतुः॥ १६॥

**उत्सारयन्निति**। मन्दविधूतकेतुः दरकम्पितध्वजपटः मरुत्। अनुलोमवत्युरिति भावः। धूलिं मार्गपांसुं उत्सारयन्निव। हेतौ शतृ-

प्रत्ययः। उत्सारणस्य हेतुरिव उत्सारणार्थमिवेति यावत्। अत एव फलोत्प्रेक्षा। उत्सारणस्वरूपं तु नोत्प्रेक्ष्यम्, वास्तवत्वात्। क्रमभङ्गपरिहाराय अनन्तरशतृप्रत्ययावपि हेतुविषयाविति तत्रापि फलोत्प्रेक्षा द्रष्टव्या। यद्वा उत्सारयन्निवेति उत्सारयितृपुरुषतादात्म्यमुत्प्रेक्ष्यत इति स्वरूपोत्प्रेक्षायामपि नानुपपत्तिः। अतिदूरादत्यन्तदूरे समुद्रमध्ये वासं विनिर्दिशन्निव अब्धिं प्रत्युद्गमाय त्वरयन्निवाग्रयायी सन् ययौ ॥ १६ ॥

प्रभूतभीमोन्नतनागनक्रा
पारिप्लवैरूर्मिमती तुरंगैः।
अपूर्ववारांनिधिमाव्रजन्ती
स्वयं तथा शौरिचमूरभूत्सा ॥ १७ ॥

**प्रभूतेति**। प्रभूताः प्रचुराः भीमाः भयंकराः नागाः गजा एव नक्रा यस्यां सा तथोक्ता, पारिप्लवैः चञ्चलैः तुरंगैरिवोर्मिमती वीचिमती। तुरंगैरिति प्रकृत्यादित्वात् तृतीया, तुरंगाणामेव वीचिमत्त्वरूपणे हेतुत्वायसंभवात्। अर्थं वा तुरंगैः हेतुभिरूर्मिमती गतिविशेषवतीत्यर्थः। वीचिमतीत्यर्थान्तरप्रतीतिः श्लेषेण संपाद्या। 'पङ्क्तीकृतानामश्वानां नमनोन्नमनाकृतिः। अतिवेगसमायुक्ता गतिरूर्मिरुदाहृता'। अपूर्ववारांनिधिं प्राप्यं पश्चिमसमुद्रमाव्रजन्ती सा शौरिचमूः। स्वयं तथाभूत स्वयमप्यपूर्वः प्रसिद्धविलक्षणो वारांनिधिरासीत्। प्रसिद्धनक्रोर्मिविलक्षणनागनक्रतुरंगोर्मियोगादिति भावः। वारांनिधिमित्यत्र 'तत्पुरुषे कृति बहुलम्' इत्यलुक् ॥ १७ ॥

समेति मां सात्त्वतवाहिनीयं
सिष्णासया हन्त जिगीषया वा।

इति प्रभूताद्भुतवैभवां ता-

मुपेन्द्रनाथामुदधिः शशङ्के ॥ १८ ॥

**समेतीति**। इयं सात्त्वतवाहिनी सात्त्वतस्य राज्ञः अपत्यं कृष्णः सात्वतः तद्वंश्यत्वात्, तस्य सेना सिष्णासया स्नातुमिच्छया जिगीषया जेतुमिच्छया वा मां समेति। हन्त विषादे। इत्यनेन प्रकारेण उदधिः प्रभूताद्भुतवैभवां प्रचुराश्चर्यसमृद्धिम् उपेन्द्रनाथां कृष्णस्वामिकां तां सेनां शशङ्के इत्युदधेः शङ्काभावे तत्कथनमतिशयोक्त्यलंकारभेदः। तेन समुद्रस्यापि भयावहा सेनेति तद्भूमा व्यज्यते ॥ १८ ॥

गतागतैर्योद्धुमिव प्रवृत्ते-

रासीदतामद्भुतभीमवेगौ।

मिथःप्रतिच्छन्दतया प्रतीक्ष्यौ

वेलावने सैन्यमहासमुद्रौ ॥ १९ ॥

**गतागतैरिति**। मिथःप्रतिच्छन्दतया प्रतीक्ष्यौ परस्परप्रतिबिम्बतया दृश्यौ। अन्योन्यसदृशाविति यावत्। सैन्यमहासमुद्रौ सैन्यं च महासमुद्रश्चेति उभौ तदाद्भुतभीमवेगौ विस्मयावहभयंकररयौ सन्तौ योद्धुं युद्धं कर्तुमिव प्रवृत्तैः गतागतैः वेलावने आसीदतां सदवकाशग्रहणायाहंप्रथमिकया। सैन्यस्य वेगेन गमनैः। संघट्टनादुल्लोलतरङ्गस्य समुद्रस्य प्रत्युद्गमनैश्च वेलावने तौ संनिकृष्टावभूतामित्यर्थः ॥ १९ ॥

महीयसा सैन्यरवेण सद्यः

पयोधिरन्तर्हिततीव्रघोषः।

प्रकम्पमानो भृशमाबभासे
भयेन तूष्णीमिव भाव्यमानः ॥ २० ॥

**महीयसेति**। महीयसा महत्तरेण सैन्यरवेण सेनाकलकलेन सद्यः तदैवान्तर्हिततीव्रघोषः तिरोहितमहारवः । भृशं प्रकम्पमानः संघदर्शनावत्यर्थमुत्तरलीभवन् पयोधिः भयेन सेनादर्शनजनितेन तूष्णीं भाव्यमानः तूष्णींभूतः क्रियमाण इवाबभासे । भीरुर्हि प्रकम्पमानः निःशब्दो भवति ॥

प्रतीक्ष्य सेनामुपधावमानां
पत्या नदीनां प्रणिधीयमानः ।
प्रकाशयन्सर्वजनानुकूल्यं
समीरणो मन्दतरं चचार ॥ २१ ॥

**प्रतीक्ष्येति** । नदीनां पत्या समुद्रेण उपधावमानामुपसर्पन्तीम् । सेनां प्रतीक्ष्य प्रणिधीयमानः प्रवेश्यमानः 'प्रणिधानं प्रयत्ने स्यात्प्रवेशे च समाहिते' इति यादवः । समीरणः सर्वजनानुकूल्यं सर्वेषामध्वश्रान्तसेनाजनानामानुकूल्यं प्रकाशयन् सन् मन्दतरं चचार । यथा कस्यचिद्राज्ञो निष्ठानं प्रति वरसैन्यसमागतेन राज्ञा प्रणिधिः क्रियमाणः चारत्वेन प्रेष्यमाणः पुरुषः तत्र तत्र सैनिकैः परिशीलनं कृत्वा परहृदयपरिज्ञानाय सर्वत्रानुकूल्यमभिनयन् मन्दतरं चरति, तद्वदिति ध्वन्यते ॥ २१ ॥

वदन्निव स्वागतमागतेभ्यः
प्रभूतसंतोषभवैः प्रणादैः ।

तरङ्गहस्तप्रहितैः सरस्वा-
नभ्यर्चयामास यदून्पयोभिः ॥ २२ ॥

वदन्निति । प्रभूतसंतोषभवैः प्रचुरसंतोषजनितैरिव स्थितैरित्युत्प्रेक्षागर्भं विशेषणम् । प्रणादैः प्रकृष्टैः निनादैः, हर्षवर्त्तायामेव हि स्वरस्य माधुर्यादिप्रकर्षः । आगतेभ्य अभ्यागतेभ्य इत्यर्थः । स्वागतं सुखागमनप्रश्नं वदन्निव व्यक्तं कथयन्निव, न तु कार्पण्यादिना अव्यक्तमिति भावः । 'वद व्यक्तायां वाचि', अस्मात् शतृप्रत्ययः । सरस्वान् सागरः तरङ्गा एव हस्ताः तैः प्रहितैः उत्क्षिप्तैः पयोभिरम्भोभिः यदून् यादवान् अभ्यर्चयामास अभिमुखमाराधयामास । न तु पराङ्मुखतयावतस्थे । तथा सति 'अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते । स तस्य दुष्कृतं दत्त्वा पुण्यमादाय गच्छति' इति प्रत्यवायस्मरणादिति भावः । 'तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता । एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन' इति स्मरणात् । यथा कुटुम्बी स्वगृहागतानभ्यागतान् यथार्हं स्वागतप्रश्नपाद्यार्घ्यादिदानैरभ्यर्चयति तथेत्युत्प्रेक्षा व्यञ्जकात् प्रयोगाद्गम्या पूर्वोक्तोत्प्रेक्षारूपकोत्तम्भितेति संकरः । यद्वा वदन्निवेत्यत्र स्थित इवशब्दो भिन्नक्रमः अभ्यर्चयामासेत्यत्रान्वेति । तदा तूत्प्रेक्षा स्पष्टैव । अन्यत्सर्वं पूर्ववत् । संघदर्शनानन्तरं स्वहस्तेन पाद्यार्घ्यादिजलदानं युक्तमिति भावः ॥ २२ ॥

चिरप्रयातं परिहृत्य शय्या-
मभ्यागतं वारिधिरादरेण ।
मिथःसमायोजितवीचिहस्तः
प्रायः प्रभुं प्रार्थयत प्रसादम् ॥ २३ ॥

चिरेति । वारिधिः समुद्रः शय्यां परिहृत्य त्यक्त्वा चिरप्रयातं चिरमन्यत्र गतमभ्यागतमिदानीमाभिमुख्येनागतं प्रभुं कृष्णमादरेण मिथःसमायोजितवीचिहस्तः अन्योन्यसंयोजिततरङ्गहस्तः सन् कूलं प्रति गच्छतां गत्वा प्रतिनिवृत्तानां च तरङ्गाणां मेलनमेव संयोजनम्, प्रसादं प्रार्थयत । इतः परं पूर्ववदिह शय्यया अनुगृह्योऽहमिति साञ्जलिबन्धं प्रार्थितवानित्यर्थः । 'अकथितं च' इति द्विकर्मकता । 'एष नारायणः श्रीमान्क्षीरार्णवनिकेतनः । नागपर्यङ्कमुत्सृज्य ह्यागतो मधुरां पुरीम्' इति भारतवचनमनुसंधाय चिरप्रयातमित्याद्युक्तम् । समुद्रत्वसाम्यादभिमानिदैवतैक्याद्वा क्षीरार्णवोचितमपि भगवच्छयनामृतमन्थनादि लवणार्णवे वर्णितम् ॥ २३ ॥

निवेश्य सेनामुदधेः समीपे
तालाङ्कसंभावितराजताले ।
दयार्द्रमेघोपमदेहभूमा
विश्वंभरो विश्रमयांचकार ॥ २४ ॥

निवेश्येति । दयार्द्रमेघोपमदेहभूमा दयया जलकल्पया आर्द्रः मेघः तस्य उपमा, उपमामास्थितो देहस्य भूमा देहस्य कान्तिः यस्य सः विश्वंभरः कृष्णः । 'संज्ञायां भृतॄवृजि' इत्यादिना खच् प्रत्ययो मुमागमश्च । तालाङ्केन बलदेवेन संभाविताः फलास्वादच्छायादिग्रहणेन कृतार्थीकृताः राजताला हिंतालवृक्षा यस्मिन् । तस्मिन् उदधेः समीपे सेनां निवेश्य विश्रमयांचकार विश्रमयति स्म । अमन्तत्वान्मित्त्वेन 'णौ मितां ह्रस्वः' इति ह्रस्वः । 'तालस्तु राजतालो दलच्छदः' इति भट्टबाणः ॥ २४ ॥

कदाचिदात्मानमवाप्तरत्नं
कपालिनं चन्द्रकलावतंसम् ।
समं सुभिक्षां च दिवं विधातुं
ध्यातागतं सिन्धुमथादिदेश ॥ २५ ॥

कदाचिदिति । अथ सेनानिवेशानन्तरं कदाचित् वेलावने विश्रान्तिसमये आत्मानं स्वमवाप्तरत्नं प्राप्तकौस्तुभं कपालिनं शंभुम् , चन्द्रकलावतंसं दिवं सुभिक्षाम् आहारसमृद्धाम्, सुलभा भिक्षा यस्यां ताम्। 'प्रादिभ्यो धातुजस्य' इति बहुव्रीहिः। विधातुं क्षमं कर्तुं शक्यम् अमृतमथनसमये तथा कृतवन्तम् । ध्यातागतं प्राक् ध्यातं ततः समागतं सिन्धुं समुद्रम् आदिदेश नियुङ्क्ते स्म ॥ २५ ॥

अनारतप्राप्तजयोद्यमानां
धर्मं निजं धारयतां यदूनाम् ।
अपत्यरक्षोचितमन्तरीपं
दिव्योपमं देयमिह त्वयेति ॥ २६ ॥

अनारतेति । अनारतप्राप्तजयोद्यमानाम् अनवरतप्राप्तजयोद्योगानां निजं धर्मं क्षेत्रं धर्मं भूमण्डलविजिगीषारूपं धारयतां यदूनां यदुवंश्यानां राज्ञामपत्यरक्षोचितं तेषु युद्धार्थं प्रस्थितेषु तदपत्यानां रक्षणस्योचितं परैः दुराधर्षं दिव्योपमं दिव्यदेशसदृशं तथा। रमणीयमन्तरीपं द्वीपम् , 'द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम्' इत्यमरः । इह प्रदेशे त्वया देयमिति । इतिकरणस्यादिदेशेत्यनेन संबन्धः ॥ २८ ॥

स तस्य दिक्पालनिवासकल्पां
विधित्सतो वृष्णिपुरीं विशालाम् ।
अगाधपाथःपरिखाभिगुप्तं
द्वीपं ददौ दुर्गविधानयोग्यम् ॥ २७ ॥

**स इति** । स समुद्रः दिक्पालनिवासकल्पाम् इन्द्रादिपुरीतुल्याम् । विशालामायामवतीं वृष्णिपुरीं वृष्णिवंश्यानां नगरीं विधित्सतः विधातुमिच्छतः तस्य कृष्णस्य । संबन्धसामान्यविवक्षया षष्ठी । अगाधमतलस्पर्शि पाथः समुद्रजलमेव परिखा, तया अभितः गुप्तमत एव दुर्गविधानयोग्यं द्वीपं ददौ । 'दुष्प्रापं तु पुरं दुर्गं यन्त्रशैलजलादिभिः' इति यादवः ॥

बलोत्तराणामपि बह्वमित्रं
स्फीतं यदूनां कुलमीक्षमाणः ।
अवन्ध्ययन्विश्वविदर्थशास्त्रं
दुराक्रमं दुर्गमियेष कर्तुम् ॥ २८ ॥

**बलोत्तराणामिति** । बलोत्तराणां बलाधिकानामपि यदूनां स्फीतं समृद्धं कुलं गणम्, 'सजातीये गणे कुलम्' इति यादवः । बह्वमित्रं जरासंधादिबहुरातिकम् ईक्षमाणः विश्ववित् सर्ववेत्ता कृष्णः अर्थशास्त्रम् 'एकः शतं योधयिति प्राकारस्थो धनुर्धरः । शतं शतसहस्रं वा तस्माद्दुर्गं विधीयते' इत्यादिनीतिशास्त्राणि अवन्ध्ययन् सफलयन् दुराक्रममशक्याक्रमणं दुर्गं कर्तुमियेष । बहूनप्यमित्रान् स्वयं लीलयैव जेतुं शक्तोऽप्यर्थशास्त्रं चरितार्थयितुं तदुक्तनीतिमनुसृतवानित्यर्थः ॥२८॥

स्वत एव स्वकीयानरिभ्यः त्रातुं शक्तस्य बाह्यगुप्त्यङ्गीकारवैफल्य-शङ्कां दृष्टान्तेनापि पराकरोति—

स शासिता शास्त्रमनुप्रतस्थे
कर्माददे कर्मफलप्रदाता।
प्रभुः स्वबुद्ध्यैव जगन्ति गोप्तुं
कुर्वीत बाह्यैरपि किं न गुप्तिम् ॥ २९ ॥

**स इति**। सः कृष्णः शासिता सर्वेषां प्रशासितापि शास्त्रमनुप्रतस्थे अनुससार। कर्मफलप्रदाता स्वयं सर्वेषां कर्मणां फलस्य प्रदातापि कर्माददे अन्वतिष्ठत्। तथाभूतोऽयं स्वबुद्ध्यैव जगन्ति गोप्तुं प्रभुः समर्थोऽपि बाह्यदुर्गादिभिरपि गुप्तिं किं न कुर्वीत, कुर्वीतैवेत्यर्थः। मानुषं भावमभिनयतः तस्य शास्त्रानुसरणवत् क्रियानुष्ठानवच्च दुर्गादि-कल्पनमपि युक्तमिति भावः। शास्त्रानुसरणं नित्यानुष्ठानं कर्मदानं काम्यानां विवक्षितमिति भेदः॥ २९ ॥

प्रभूतरत्नद्युतिकेसरं त-
त्प्रवालपत्त्रौघपरीतपार्श्वम्।
स्थानं हरेरिष्टतमं तदासी-
त्संभूतिराजीवमिवेन्दिरायाः॥ ३० ॥

**प्रभूतेति**। प्रभूताः प्रचुराः रत्नद्युतयः केसराः किंजल्का इव यस्य तत्तथोक्तम्। प्रवाला विद्रुमा एव पत्त्राणीव तेषामोघेन समूहेन परीतपार्श्वं तत् स्थानं समुद्रदत्तमन्तरीपम् इन्दिरायाः लक्ष्म्याः संभूतिराजीवमुत्पत्तिकमलमिव हरेः कृष्णस्येष्टतममासीत्। 'पुनश्च पद्मादु-

द्भूता ह्यादित्योऽभूद्यदा हरिः' इति लक्ष्म्याः कमलेऽप्युत्पत्तिः पुराणप्रसिद्धा ॥

प्रचोदितस्तत्र च विश्वकर्मा
नाथप्रसत्त्यै नलिनासनाद्यैः ।
रथ्यादिवैचित्र्यवतीं वितेने
राशिं गुणानामिव राजधानीम् ॥ ३१ ॥

**प्रचोदित इति** । तत्र च द्वीपे नाथप्रसत्त्यै कृष्णस्य प्रसादाय नलिनासनाद्यैः ब्रह्मादिभिः प्रचोदितः प्रेरितः विश्वकर्मा देवशिल्पी रथ्यादिवैचित्र्यवतीं विशिखाप्राकारगोपुरादिवैचित्र्ययुक्तां गुणानां राशिमिव स्थितां राजधानीं वितेने ॥ ३१ ॥

स शिल्पविद्यां विधिनोपदिष्टा-
मशेषतो नूनमधीत्य दाक्ष्यात् ।
शुभानि तस्यां भवनानि कर्तुं
सौधेषु दिव्येषु चकार योग्याम् ॥ ३२ ॥

**स इति** । स विश्वकर्मा विधिना ब्रह्मणा उपदिष्टां शिल्पविद्यां शिल्पशास्त्रं दाक्ष्यात् सामर्थ्यात् अशेषतः कृत्स्नमधीत्य नूनं तस्यां राजधान्यां शुभानि मनोज्ञानि भवनानि कर्तुं दिव्येषु दिवि भवेषु योग्यामभ्यासं चकार । सम्यगधीतापि शिल्पविद्या बहुवारं सौधादिनिर्माणाभ्यासे सत्येव यथावन्निर्माणकौशलीं पुष्णातीति भावः । 'योग्याभ्यासः परिचयः' इति यादवः ॥ ३२ ॥

गतागतार्थं हरिवाहिनीनां
सेतुं च योगेन बबन्ध सिन्धौ ।
चकार दिग्भागविमूढतां यः
प्रत्यर्थिनां चक्रधरप्रभावात् ॥ ३३ ॥

**गतेति** । हरिवाहिनीनां कृष्णसेनानां गतागतार्थं गमनागमनाय सिन्धौ समुद्रे सेतुं च योगेन संकल्पेन बबन्ध । यः सेतुः चक्रधरस्य कृष्णस्य प्रभावात् प्रत्यर्थिनां शत्रूणां द्वारकाक्रमणार्थमागतानां दिक्काल-विमूढतां चकार ॥ ३३ ॥

नलेन पूर्वं स्वसुतेन सृष्टा-
न्नवीनमन्यूनतरं स्वक्लृप्तम् ।
समीक्ष्य तुष्यन्नपि विश्वकर्मा
नाथाय रोचेत न वेत्यताम्यत् ॥ ३४ ॥

**नलेनेति** । विश्वकर्मा पूर्वं त्रेतायुगे स्वसुतेन नलेन सृष्टात् रामसे-तोरिति भावः । अन्यूनतरमतिशयेनान्यूनं किंचिदपि न्यूनतारहितमिति यावत् । स्वक्लृप्तं स्वनिर्मितं नवीनं सेतुमिति लभ्यते । समीक्ष्य तुष्य-न्नपि अनवद्यमिति तुष्यन्नपि नाथाय रोचेत न वेति अताम्यत् चिन्तया ग्लानोऽभूत् ॥ ३४ ॥

स सेतुरास्कन्दितकूलयुग्मः
संकल्पितो वासवलोकतक्ष्णा ।
महापुरीं यां च महीं च मातुं
मध्ये तुलादण्ड इवार्पितोऽभूत् ॥ ३५ ॥

**स इति ।** वासवलोकतक्ष्णा इन्द्रलोकशिल्पिना संकल्पितः संकल्पेन निर्मितः आस्कन्दितकूलयुग्मः आक्रान्तकूलद्वयः द्वारकान्तरीपमारभ्य वेलापर्यन्तमायत इति यावत् । यः सेतुः तां महापुरीं द्वारकां महीं च मातुं तुलया परिमातुं मध्येऽर्पितस्तुलादण्ड इवाभूत् ॥ ३५ ॥

निवेदितां निर्जरशिल्पिनैव
स्वयं चमत्कारवता सुक्लृप्ताम् ।
अदृष्टपूर्वामिव विश्वदर्शी
दृष्टिः सतां द्रष्टुमियेष नाथः ॥ ३६ ॥

**निवेदितामिति ।** विश्वदर्शी आखिलदर्शनशीलः सतां दृष्टिः 'चक्षुर्देवानामुत मर्त्यानाम्' इति श्रुतेः चक्षुर्वत् ज्ञानप्रदः, प्रीतिगोचरश्च । नाथः कृष्णः चमत्कारवता कौशलवता निर्जरशिल्पिना विश्वकर्मणा स्वयमेव सुक्लृप्तां सुष्ठु निर्मितां निवेदितां तेनैव निर्वृत्तेयं पुरी द्रष्टव्येति निवेदितां तां पुरीमदृष्टपूर्वामिव विश्वदर्शिना स्वेन सदा दृश्यमानत्वेऽपि पूर्वमदृष्टामिव द्रष्टुमियेष विश्वकर्मणि भक्तेऽनुकम्पयेति भावः ॥ ३६ ॥

निजप्रतिच्छन्दनिदर्शनीयां
मृग्योपमानान्तरमृष्टकान्तिम् ।
उदन्वता दत्तकरेण देवः
प्रदर्शितां पूर्वमवैक्षतैनाम् ॥ ३७ ॥

**निजेति ।** देवः कृष्णः निजप्रतिच्छन्दनिदर्शनीयां स्वप्रतिबिम्बेनोपमेयां मृग्योपमानान्तरा गवेष्योपमानान्तरा मृष्टा स्फीता कान्तिः यस्यास्तां दत्तकरेण हस्तावलम्बार्थं स्वस्मै दत्तहस्तेन उदन्वता समुद्रेण पूर्वं प्रद-

शितामेनां पुरीम् अवैक्षत । 'द्वितीयाटौस्स्वेनः' इत्येनादेशः ॥ ३७ ॥

अनन्यदृष्टिं नगरी नवीना
विस्मेरतां विश्वपतिं निनाय ।
स्वयंप्रभैः सौधभरैरुदारै-
स्तुङ्गैः सुमेरोरिव रत्नशृङ्गैः ॥ ३८ ॥

**अनन्येति** । नवीना नगरी द्वारका स्वयंप्रभैः रत्नमयतया प्रकाशमानैः, प्रपूर्वात् 'भा दीप्तौ' इति धातोः 'आतश्चोपसर्गे' इति कप्रत्ययः । उदारैर्महद्भिः तुङ्गैरुन्नतैः अत एव मेरोः रत्नशृङ्गैरिव स्थितैः सौधभरैः सौधभारैः अनन्यदृष्टिं तदेकासक्तलोचनं विश्वपतिं कृष्णं विस्मेरतां विस्मयाविष्टतां निनाय ॥ ३८ ॥

तामद्भुतां तारकिताग्रसौधां
धर्मस्य पूर्णामिव योगसिद्धिम् ।
सपौरभृत्यः समयान्ववेक्षी
विवेश वृष्ण्यन्धकयूथनाथः ॥ ३९ ॥

**तामिति** । तारकिताग्रसौधां तारकितानि संजाततारकाणि अग्राणि येषां तादृशाः सौधाः यस्यां तां तथाभूताम्, सौधाग्रस्यात्युन्नतत्वात् नक्षत्रगणशेखरितशिखरभासमानसौधपङ्क्तिमिति यावत् । धर्मस्य पूर्णां योगसिद्धिमिव स्थिताम्, यथा योगसिद्धिः जरामयादिहरणेन देहस्थैर्यकारिणी तद्वत् धर्मस्य स्थैर्यकारिणीं स्थिरधर्मसंपादिनीमिति यावत् । अद्भुतमाश्चर्यभूतां तां द्वारकां सपौरभृत्यः पौरैः भृत्यैश्च सहितः वृष्ण्यन्धकयूथनाथः वृष्णिवंश्यानामन्धकवंश्यानां च यूथस्य समूहस्य नाथः

कृष्णः समयान्ववेक्षी शुभसमयप्रतीक्षः सन् विवेश ॥ ३९ ॥

परेण नाकं प्रलयानभिज्ञा-
मधीयते यस्य पुरीमचिन्त्याम् ।
स लोकनाथो विदधे सनाथां
दूराधिकां द्वारवतीं दिवोऽपि ॥ ४० ॥

**परेणेति** । यस्य कृष्णस्य पुरीं दिव्यनगरीं नाकं परेण नाकस्य परस्तात् 'एनबन्यतरस्यामदूरेऽपञ्चम्याः' इति परशब्दादेनप्प्रत्ययः। 'एनपा द्वितीया' इति तद्योगे द्वितीया । प्रलयस्यानभिज्ञां प्रलयरहिताम् अचिन्त्यामतर्क्यवैभवां सतीमधीयते 'परेण नाकं निहितं गुहायाम्' इत्यादिष्वामनन्ति, स लोकनाथः कृष्णः दिवः स्वर्गादपि दूरमत्यर्थमधिकां द्वारवतीं सनाथां स्वाधिष्ठानेन नाथवतीं विदधे । परेणेति शब्दशक्त्या परमदूरत्वान्नाकादद्दूरविप्रकर्षप्रतीतेः दिवो दूराधिकामित्यनेन ततोऽप्यतिशयो व्यञ्जितः । यस्य पुरी प्रलयानभिज्ञा तदधिष्ठिता द्वारवती दिवोऽप्यधिकेति किं चित्रमिति भावः ॥ ४० ॥

विधाय यस्यां विदितैः स्वचिह्नै-
र्यदून्यथास्थाननिवेशतुष्टान् ।
तामेव नाथस्त्रिदशाभिनन्द्यां
त्यक्तामयोध्यां मधुरां च मेने ॥ ४१ ॥

**विधायेति** । नाथः कृष्णः तस्यां द्वारकायां यदून् विदितैः प्रसिद्धैः स्वचिह्नैः स्वस्वस्थानचिह्नैः ध्वजादिभिः सह यथास्थाननिवेशात् वयःकर्मानुसारिस्वस्वोचितस्थानानतिक्रमेण निवेशात् संतुष्टान् विधाय

त्रिदशाभिनन्द्यां तां द्वारकामेव स्वकामयोध्यां साकेतपुरीम्। 'देवानां पूरयोध्या' इति श्रुतेः। परमपदं वा मधुरां च मेने। अयोध्यामधुरयोरिव तत्र स्वकीयत्वाभिमानं कृतवानित्यर्थः ॥ ४१ ॥

अथ द्वात्रिंशता श्लोकैः पुरीं वर्णयति—

उदन्वति व्योमतले च लग्नां
दृष्टोभया दर्पणदर्शनीये।
यामद्भुतामात्मपुरीं च देवा-
श्छायाममन्यन्त मिथः समीक्ष्याम् ॥ ४२ ॥

उदन्वतीति। अद्भुतां यां द्वारकामात्मपुरीममरावतीं च दृष्टोभयाः दृष्टद्वारकामरावत्युभयाः देवाः दर्पणदर्शनीये मुकुरवद्दृश्ये उदन्वति व्योमतले च लग्नाम् अत एव स्वच्छे संक्रान्ततया समीक्ष्यां सम्यक् द्रष्टुं योग्यां मिथः परस्परं छायां प्रतिबिम्बममन्यन्त। 'रराज सा रामजनार्दनाभ्याम्' इत्युत्तरत्र यत्पदस्य संबन्धः। उदन्वति द्वारकादर्शने स्वपुरीप्रतिबिम्ब इति व्योम्नि स्वपुरीदर्शने द्वारकाप्रतिबिम्ब इति चामन्यन्तेत्यर्थः। अनेन द्वयोरपि परस्परमुपमानोपमेयत्वरूप उपमेयोपमालंकारो व्यज्यते ॥

प्राकारचक्रं पृथुभिस्तरङ्गै-
रास्फालयन्नम्बुधिरात्तवेगः।
अमर्त्यमुख्यैरपि जातकोपै-
रक्षोभ्यतां व्याकुरुतेव यस्याः ॥ ४३ ॥

प्राकारेति। प्राकारचक्रं सालवलयं पृथुभिः तरङ्गैः कल्लोलैरात्तवेगः गृहीतवेगः सन् आस्फालयन् अम्बुधिः जातरोषैरुत्पन्नकोपैः अमर्त्यमुख्यैः

देवप्रभृतिभिरपि यस्याः द्वारकायाः अक्षोभ्यतामनाधर्षणीयतां व्याकुर्वतेव व्याचष्टेव । सदा समुद्रकल्लोलास्फालनेऽप्यक्षोभ्यत्वमेवान्यैरपि देवादिभिरक्षोभ्यतायामुदाहरणमित्यर्थः ॥ ४३ ॥

यत्सौधपर्यङ्कजुषां वधूनां
संगृह्य निःश्वासगुणं समीरः ।
पद्मेषु नूनं प्रदिशन्प्रभाते
गतागतं याति गवाक्षवर्त्मा ॥ ४४ ॥

**यत्सौधेति** । प्रभाते यत्सौधपर्यङ्कजुषां यस्याः सौधस्थितमञ्चस्थितानां वधूनां निःश्वासगुणं निःश्वासस्य सौरभं संगृह्य सम्यक् गृहीत्वा नूनं ध्रुवं पद्मेषु प्रदिशन् गवाक्षः वर्त्म मार्गो यस्य तथाभूतः समीरः गतागतं याति प्राप्नोति । गतागतमिति द्वन्द्वैकवद्भावः । गवाक्षेषु मारुतस्य गमनागमनं निःश्वाससौरभं गृहीत्वा तस्य पद्मेष्वाधानार्थतयोत्प्रेक्ष्यते ॥

जालानि यत्रागुरुधूमजालैः
संदिग्धपारावतसंनिधानैः ।
अवासयन्नूनमहार्यगन्धा-
नासेदुषां नाकसदां विमानान् ॥ ४५ ॥

**जालानीति** । यत्र द्वारकायां जालानि गवाक्षाः संदिग्धं पारावतानां पक्षिविशेषाणां संनिधानं यैस्तैः पारावतसंचारसंशयमादधानैः, वर्णेन पारावतसदृशैरिति यावत् । अगुरुधूमजालैः कृष्णागुरुधूमसमूहैः 'जालं समूह आनायो गवाक्षक्षारकावपि' इत्यमरः । आसेदुषां संनिकृष्टानां नाकसदां नाके सीदन्तीति नाकसदः देवाः तेषाम् । विमानान्

अहार्यगन्धाननपनोद्यगन्धान् अवासयन् वासयन्ति स्म सुरभीकुर्वन्ति स्म । यथाहार्यगन्धा भवन्ति तथावासयन्नित्यर्थः । नूनमित्युक्तार्थनिश्चये । 'नूनं निश्चयतर्कयोः' इति विश्वः । अगुरुशब्दः उकारमध्यः 'वंशिकागुरुराजार्हलोहकृमिजजाङ्गकम्' इत्यमरकोशे क्षीरस्वामिप्रभृतिभिः तथा व्याख्यातम् । 'अगुरुः स्याच्छिंशुपायां जोङ्गके च लघुन्यपि' इति विश्वप्रकाशश्च ॥

परार्ध्यरत्नप्रचितात्मभिर्या
प्रासादमालाभिरलंकृताङ्गी ।
नाथोपभोगानुगुणां पयोधौ
ननन्द दृष्ट्वेव निजामभिख्याम् ॥ ४६ ॥

**परार्ध्येति** । परार्ध्यरत्नप्रचितात्मभिः उत्तमरत्नोचितरूपाभिः प्रासादमालाभिरलंकृताङ्गी या द्वारका नाथोपभोगानुगुणां कृष्णोपभोगस्योचितां निजामात्मीयामभिख्यां शोभां पयोधौ प्रतिबिम्बग्राहके दृष्ट्वा ननन्देव पयोधौ स्वशोभादर्शनात् तस्या अप्यानन्दः संभाव्यत इत्युत्प्रेक्षा । 'परार्ध्याग्रप्राग्रहरे' इत्युत्तमपर्यायेष्वमरः । परपूर्वादर्धशब्दात् 'परावराधमोत्तमपूर्वाच्च' इति यत्प्रत्ययः ॥ ४६ ॥

मणिप्रदीपप्रशमप्रयुक्ते
विहारचूर्णे विफले वधूनाम् ।
अपत्रपायाः समयेऽपि यस्या-
मभूदनास्था परमार्थदीपे ॥ ४७ ॥

**मणीति** । यस्यां द्वारकायां मणिप्रदीपप्रशमप्रयुक्ते रत्नदीपानां प्रशमाय प्रयुक्ते । अश्वघासादित्वात् चतुर्थीसमासः । षष्ठीसमासो वा ।

विहारचूर्णे विहारकुंकुमादिचूर्णे विफले तत्प्रगमनाक्षमतया निष्फले सति वधूनामपत्रपाया लज्जायाः समयेऽपि नीवीविश्लथनसमयेऽपि परमार्थदीपे अनास्थाभूत् निर्वापणादरो नासीदित्यर्थः । रत्नदीपानामप्रतिक्रियार्हत्वेन तन्निर्वापणवैफल्यादिति भावः ॥

प्रायेण यत्र प्रमदाजनानां
नित्यं गुणैरप्रतिमैर्निरुद्धाः ।
संस्कारयोगादपि लब्धसत्त्वा-
श्चित्रार्पिता नाकसदो विचेरुः ॥ ४८ ॥

**प्रायेणेति** । यत्र चित्रार्पिताः चित्रलिखिताः नाकसदः देवाः संस्कारयोगात् प्राणप्रतिष्ठाख्यसंस्कारयोगात् लब्धसत्त्वाः लब्धप्राणा अपि । 'प्राणे बलेऽन्तःकरणे' इति सत्त्वशब्दनानार्थे वैजयन्ती । प्रायेण नूनं प्रमदाजनानां अप्रतिमैरनुपमैः गुणैः सौन्दर्यादिभिः नित्यं निरुद्धाः वशीकृताः सन्तः न चेरुः । कथमन्यथा चेतनानां अचेतनवत् स्थास्नुतेति भावः ॥ ४८ ॥

यदन्तरे यामिकवारणाना-
मासेदुषामम्बुनिधेरभिख्याम् ।
करानभिम्लोषु पुनश्चकासुः
कल्लोललग्ना इव कर्णशङ्खाः ॥ ४९ ॥

**यदन्तर इति** । यदन्तरे यस्याः मध्ये । अम्बुनिधेरभिख्यां समुद्रशोभाम् । आसेदुषां प्राप्तवतां तथा विपुलवपुषां यामिकवारणानां यामरक्षकाणां गजानां कर्णशङ्खाः कर्णेषु शङ्खाकारेण विलिखिताः पत्रलेखाः । "कर्णशङ्खौ तु शंकिला" इति गजमण्डनप्रकरणे यादवः । करा-

भिमर्शेषु सत्सु कल्लोलभ्ना इवं चकासुः । पुनःशब्दो वाक्यालंकारे । कर्णप्रदेशाभिमर्शकरसंपर्कात् समुद्रवीचीलग्नाः शङ्खा इव बभुरित्यर्थः ॥

सौधेषु यस्यां युवसेवितेषु
त्रिविष्टपादप्यधिकोन्नतेषु ।
व्रीलातिभारान्नमिता इवास-
न्वैमानिकैरध्युषिता विमानाः ॥ ५० ॥

सौधेष्विति । यस्यां युवभिः सेवितेषु त्रिविष्टपात् स्वर्गादप्यधिकोन्नतेषु सौधेषु विषयेषु वैमानिकैः विमानशायिभिः देवैरध्युषिता विमानाः व्रीलातिभारात् लज्जातिशयात् नमिता इवासन् । अत्यन्तभारं वहन्तः तेनावनमिता भवन्तीति भावः । सौधानामधो विमानसंचारः सौधोन्नतिं वीक्ष्य तेषां लज्जयावनमनमुत्प्रेक्ष्यते ॥ ५० ॥

न षड्भिरासन्व्यसनानि पुंसां
यद्वासिनामीतिभिरूर्मिभिर्वा ।
अयोगयत्नेन विनैव चान्ते
जज्ञे जगद्धातरि बुद्धिरेका ॥ ५१ ॥

न षड्भिरिति । यद्वासिनां यस्यां वसतां षड्भिः ईतिभिरतिवृष्ट्यादिभिः षड्भिरूर्मिभिः कामक्रोधलोभमोहमदमात्सर्यरूपैरूर्मिभिः वाकारः समुच्चयार्थः । व्यसनानि विपदः नासन् । किंच अयोगयत्नेन योगयत्नस्वरूपेण विनैव । स्वल्पार्थे नञ् । यद्वा अनुदरा कन्येतिवदीषदर्थे नञ् । ईषदपि योगयत्नं विनैवेत्यर्थः । "नञभावे निषेधे स्वरूपार्थे व्यतिक्रमे । ईषदर्थे च सादृश्ये तद्विरुद्धतदन्ययोः' इति विश्वः । अथवा

भगवद्योगेन विनैवेत्यर्थः । अकारस्य भगवद्वाचित्वात् । पृथग्विना नानाभिरिति तृतीया । अन्ते अन्त्यकाले । जगद्धातरि जगद्धारके नारायणे एका विषयान्तरासंवलिता ध्यानरूपा बुद्धिः जज्ञे जाता । योगाभ्यासवशीकृतमनस इव पौरजनमात्रस्य भगवत्संनिधानमाहात्म्यादन्तकाले भगवदनुसंधानमासीदित्यर्थः ॥

अदेशकालप्रविभागभाजा
भूम्ना जगद्धातुरचिन्त्यभूम्नः ।
यस्यां विहारोपवनान्यभूव-
न्समाधियोग्यानि तपोवनानि ॥ ५२ ॥

अदेशेति । यस्यामचिन्त्यभूम्नः अतर्क्यमहिम्नः जगद्धातुः कृष्णस्य अदेशकालप्रविभागभाजा देशकालयोः प्रविभागं परिच्छेदमभजमानेन भूम्ना महिम्ना विहारोपवनानि क्रीडार्थोपवनानि समाधियोग्यानि समाधेरुचितानि तपोवनान्यभूवन् भगवन्महिम्ना मदनोद्दीपनेषु उपवनेष्वपि जनानां मनांसि समाधिप्रवणान्यासन्नित्यर्थः ॥

अनंहसामध्वरदीक्षिताना-
माह्वानतः प्रागपि संनिधानात् ।
अभुङ्क्त कृत्स्नानि हवींषि नित्यं
यत्र स्वयं यज्ञतनुः स देवः ॥ ५३ ॥

अनंहसामिति । यत्र द्वारकायां यज्ञतनुः यज्ञरूपः यज्ञो वै विष्णुरिति श्रुतिः । स देवः कृष्णः अनंहसामनघानां निर्मलान्तःकरणतया शुद्धयाजिनामध्वरेषु दीक्षितानां कर्तॄणामाह्वानतः देवताह्वानात्प्रागपि नित्यं संनिधानाद्धेतोः कृत्स्नानि हवींषि स्वयमभुङ्क्त ।

इन्द्रादिमूर्त्यन्तरोपायेन विना स्वयमेव भुक्तवान् । मिश्रयाजिनामेव देवतोद्देशेनेन्द्रादिमूर्त्यादिकोपायापेक्षा न तु शुद्धयाजिनामिति वृद्धाः ॥

रतिप्रसूता इव राजकन्या
रसोदधेरूर्मिपदं भजन्त्यः ।
विरक्तभाव्यं तमवाप्य यस्यां
रागोपपन्ना रमयांबभूवुः ॥ ५४ ॥

**रतीति** । यस्यां द्वारकायां रतिप्रसूता इव स्मरदयितायामुत्पन्ना इव स्थिताः सौन्दर्यादिमत्त्वात् तथोत्प्रेक्षा । रसोदधेः शृङ्गारसागरस्य । ऊर्मिपदं वीचिस्थानं भजन्त्यः शृङ्गारचेष्टाविलासवैदग्ध्ययुक्ताः राजकन्याः क्षत्रियकुमारिकाः विरक्तभाव्यं वीतरागैः ध्येयं कृष्णमवाप्य रागोपपन्नाः रागयुक्ताः सत्यः रमयांबभूवुः रमयन्ति स्म ॥

प्रवालचित्रीकृतजालकश्रीः
सालावृतासंभृतपत्रजाला ।
परिष्कृता भद्रमृगादिभिर्या
बभौ स्मरस्येव विहारवन्या ॥ ५५ ॥

**प्रवालेति** । प्रवालैः विद्रुमैः चित्रीकृता जालकानां गवाक्षाणां श्रीर्यस्या इति तथोक्ता । सालावृता प्राकारपरिवृता संभृतपत्रजाला संपादितवाहनसमूहा भद्रमृगादिभिरादिशब्देन गजजातिः गृह्यते । "भद्रो मन्द्रो मृगश्चेति विज्ञेयास्त्रिविधा गजाः" इति हलायुधः । तैः परिष्कृता या द्वारका स्मरस्य विहारवन्येव क्रीडावनसमूह इव बभौ । 'पाशादिभ्यो यः' इति समूहार्थे यप्रत्ययः । वन्यापक्षे पल्लववि-

द्रुमकोरकादिमहाः वृक्षपरिवृताः संभृतवर्णसमूहाः चमरकस्तूरीमृगादिश्रेष्ठमृगशुककोकिलादिभिः परिष्कृतेति क्रमेण विशेषणानि योज्यानि । 'प्रवालो वल्लकीचण्डे विद्रुमे नवपल्लवे । जालं गवाक्ष आनाये दंभे कोरकवृन्दयोः" "सालः स्याद्वृक्षमात्रेऽपि प्राकारे शंकुकद्रुमे । पत्रं स्यात् वाहने पक्षे" इति च सर्वत्र विश्वः ॥

ध्वजाग्रभिन्नात्तुहिनांशुबिंबा-
दनुक्षरन्त्या सुधयानुलिप्तैः ।
चिरप्रक्लृप्तैरपि यत्र सौधै-
र्नित्यं नवीनैरिव निर्बभासे ॥ ५६ ॥

ध्वजेति । यत्र ध्वजाग्रभिन्नात् ध्वजयष्टीनामग्रैः भिन्नाद्विदारितात् । सुधांशुबिंबादनुक्षरन्त्या सुधयानुलिप्तैः सौधैः चिरप्रक्लृप्तैः चिरनिर्मितैरपि नित्यं नवीनैरिव निर्बभासे विभातम् ॥

स्वैर्वैभवैरप्रतिरूपशोभैः
व्यक्तश्रियो वाङ्मनसा निवृत्तैः ।
तिरोदधुर्यत्र नरेन्द्रवासाः
स्वयं प्रभां देवसभां सुधर्माम् ॥ ५७ ॥

स्वेति । अप्रतिरूपशोभैरप्रतिमकान्तिभिः वाङ्मनसा निवृत्तैः वाक् च मनश्च वाङ्मनसे । अचतुरेत्यादिना समासान्तनिपातः । ताभ्यामनिवृत्तैरतिशोभया सदा जनानां मनसा वचसा च श्लाघ्यमानैः स्वैर्वैभवैः स्वसमृद्धिभिः मणिकुट्टिमादिभिः व्यक्तश्रियः स्फुटसंपदः नरेन्द्रवासाः राजगृहाणि स्वयं प्रभां रत्नमयतया स्वयमेव प्रकाशमानाम् ।

'आतश्चोपसर्गे' इति कः । सुधर्मा देवसभाम् । तिरोदधुः तिरश्चकुः । धर्मादनिच्केवलादित्यनिचिङा उभाभ्यामन्यतरस्यामिति डाबन्तः सुधर्मा-शब्दः ॥

विभूतिभेदैरनुपप्लवैर्या
भोगार्थिनां भूमिगताप्यभौमैः ।
निवारयामास तपोधनानां
वासादरं वासवराजधान्याम् ॥ ५८ ॥

**विभूतीति** । या द्वारका भूमिगताप्यभौमैः भूमौ भवा भौमाः ततोऽन्यैः भूमावसंभावितैः अनुपप्लवैर्निराबाधैः विभूतिभेदैः संपद्विशेषैः भोगार्थिनां निर्बाधत्वेन 'तं देवा भक्षयन्ति' इति श्रुतेः । राजसदेवप्रेष्यत्व-रूपबाधासहितान् स्वर्गभोगान् तपोधनानां स्वर्गार्थं तपश्चरतां वासवराज-धान्याममरावत्यां वासादरं वासेऽभिलाषं निवारयामास । एतद्विभूती-नामतिशयितत्वादिति भावः ॥

यत्सौधरत्नप्रकरेषु विष्वक्
प्रसारितैरन्वहमैकमुख्यात् ।
करैः सहस्रेण गृहीतदीप्तिः
प्रद्योतते नूनमतीव भास्वान् ॥ ५९ ॥

**यत्सौधेति** । यत्सौधरत्नप्रकरेषु यस्याः सौधानां मणिनिकरेषु अन्वहं प्रतिदिनम् ऐकमुख्यात् तदेकाभिमुखत्वमवलम्ब्य विष्वक् सम-न्ततः । प्रसारितैः सहस्रेण करैः किरणैः हस्तैरित्यपि गम्यते । "विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः"- इति सहस्रशब्दस्यैक-

वचनात्तता । नूनं प्रायः गृहीतदीप्तिः तेभ्य उपात्तप्रभः भास्वानादित्यः । अतीव प्रद्योतते अत्यर्थं प्रकाशते । प्रागुदितस्य रवेः पश्चिमस्थद्वारकाभिमुखतया प्रसारितैः करैः तत्सौधमणिनिकरदीप्तिग्रहणेन उदयानन्तरं क्रमेण तस्य दुर्निरीक्षः प्रकाशप्रकर्षो जात इत्युत्प्रेक्ष्यते ॥

यच्चन्द्रशालासु निषेदुषीणां
मृगीदृशां हारमणिप्रकाशैः ।
तिरस्क्रियां प्राप्य विलज्जमाना-
स्तारागणा नूनमधश्चरन्ति ॥ ६० ॥

**यदिति** । यच्चन्द्रशालासु यस्याः शिरोगृहेषु निषेदुषीणां स्थितवतीनाम् । मृगीदृशां हारमणिप्रकाशैः तिरस्क्रियामभिभवं प्राप्य विलज्जमानाः तारागणाः नूनमधश्चरन्ति । शिरोगृहाणामुत्तुङ्गताभिव्यक्तयेऽतिशयोक्त्याध्यवसितं ताराणामधःसंचरणं तद्गतललनाजनहारमणिप्रभाकृततिरस्कारप्राप्तिमूलकलज्जाहेतुकमुत्प्रेक्ष्यते ॥

गृहेषु यस्यां मणिभित्तिभागे
प्रतिक्षणं दृष्टमुखेन्दुबिम्बः ।
वधूजनः केवलमग्रहस्तै-
रादत्त मङ्गल्यतयात्मदर्शम् ॥ ६१ ॥

**गृहेष्विति** । यस्यां द्वारकायां गृहेषु मणिभित्तिभागे प्रतिक्षणं क्षणे क्षणे वीप्सायामव्ययीभावः । दृष्टमुखेन्दुबिम्बः अवलोकितमुखचन्द्रबिम्बः वधूजनः आत्मदर्शमादर्शमग्रहस्तैः 'अग्राणि च ते हस्ताश्चेत्यवयवावयविनोरभेदाविवक्षया' समानाधिकरणसमासः । तैः हस्ताग्रैः केवलं

मङ्गल्यतया आदत्त मङ्गलत्वेन जग्राह । न तु मुखदिदृक्षया अन्यतः सिद्धत्वादिति भावः । "आत्मदर्शस्तु दर्पणः" इत्यमरशेषः ॥

अनन्तचित्रप्रतिमाभिरामै-
रजस्रमाक्रान्तदिशावकाशैः ।
अभावयद्गोपुरवैभवैर्या
विश्वप्रसूतेरिव वैश्वरूप्यम् ॥ ६२ ॥

**अनन्तेति** । या द्वारका अनन्तचित्रप्रतिमाभिरामैः असंख्याभिरालेख्यप्रतिमाभिरभिरामैः अजस्रं सदाक्रान्तदिशावकाशैरतिविपुलतया दिङ्मुखान्याक्रम्य स्थितैः गोपुराणां पुरद्वाराणां वैभवैः समृद्धिभिः विश्वप्रसूतेरखिलजनकस्य नारायणस्य वैश्वरूप्यम् । तत्तदवयवविश्रान्तनिखिलचराचरप्राणिवर्गजगत्त्वापि विश्वरूपत्वं गीतासु विश्वरूपाध्याये प्रपञ्चितम् । अभावयादिव अभ्यनयादिव तदनुकरणं कृतवतीत्यर्थः ॥

सरोभिरुल्लासितपुष्करश्रीः
सङ्गोज्झितैः संगमितप्रयागा ।
प्रभासिता रत्नगणांशुभिर्या
धर्माश्रयाणामिव संसदासीत् ॥ ६३ ॥

**सरोभिरिति** । सरोभिः सरसीभिः उल्लासितपुष्करश्रीः उन्मेषितपंकजशोभा । सङ्गोज्झितैः कर्मफलसङ्गरहितैः सङ्गमितप्रयागा संयोजितप्रकृष्टयागा । फलकामानां त्याग एव यागानां सात्त्विकरूपः प्रकर्षः रत्नगणांशुभिः प्रभासिता प्रकर्षेणोद्दीपिता या द्वारका धर्माश्रयाणां पुण्यक्षेत्राणां पुष्करप्रयागप्रभासानां संसदिवासीत् । पुष्करप्रयागपदश्ले-

षात् प्रभासितेत्यत्र प्रभासीकृतेत्यर्थान्तरेण श्लेषाच्च तथोत्प्रेक्षा ।

हसद्भिरुच्चैःश्रवसं हयाग्र्यै-
रैरावतं दन्तिवरैश्च दृप्तैः ।
नरोत्तमैर्नाकसदश्च याभू-
त्सुभ्रूभिरप्यप्सरसः स्वयं द्यौः ॥ ६४ ॥

हसद्भिरिति । या द्वारका उच्चैःश्रवसमिन्द्राश्वं हसद्भिः हयाग्र्यैरश्वश्रेष्ठैरैरावतं हसद्भिः दृप्तैः दन्तिवरैः नाकसदो देवान् हसद्भिर्नरोत्तमैः अप्सरसो हसन्तीभिः सुभ्रूभिश्च स्वयं द्यौरभूदित्यर्थः । हसद्भिरिति सर्वत्रानुषङ्गः । सुभ्रूविशेषणत्वे लिङ्गविपरिणामश्च सर्वस्य विशेषणत्वेन पुमांस्त्रियेत्येकशेषता वा ।

वप्रेषु यस्याः स्फटिकप्रदेशा-
न्द्वाराभिमानाद्द्रुतमापतन्तः ।
अवापुरागन्तुजनाः सलीलै-
रन्तःस्मितैर्नागरकैर्निरोधम् ॥ ६५ ॥

वप्रेष्विति । यस्या वप्रेषु प्राकारमूलबन्धेषु स्फटिकप्रदेशान् स्फटिकमयभागान् द्वाराभिमानात् स्वच्छत्वेन द्वाराणीति भ्रमात् द्रुतं शीघ्रमापतन्तः आगन्तुजनाः आगन्तवो वैदिकजनाः सलीलैः लीलासहितैः लीलार्थं समीपोपसर्पणपर्यन्तं अनिरुध्य स्थितैरन्तर्हासैः । नागरकैः नगरभवैः जनैः निरोधमवापुः । स्फटिककुड्यमिदं न द्वारमिति निरुद्धा इत्यर्थः ॥

पयोभिरच्छस्फटिकद्रवाभै:
दवीयसां दर्शनमादधानैः ।
सुधाधिकस्वादुरसैरविन्द-
न्स्वान्तोपमां यत्र सतां सरस्यः ॥ ६६ ॥

**पयोभिरिति** । यत्र सरस्यः सरांसि अच्छस्फटिकद्रवाभैः निर्मलस्फटिकद्रवसदृशैः दवीयसामतिदूरास्थितानामपि स्वान्तर्गतासिकतादीनां दर्शनमादधानैः संपादयद्भिःसुधाधिकस्वादुरसैरमृतातिशायिमधुररसैः पयोभिः जलैः सतां स्वान्तोपमां चित्तेन सादृश्यमविन्दन् लभन्त । सांत चित्तान्यपि निर्धूतकल्मषत्वादच्छानि भूतभाविनां दवीयसामपि दर्शनसंपादकानि सर्वभूतहितावहत्वादतिमधुराणि चेति भावः ॥

यामेकचित्तः प्रसमीक्ष्य तुष्य-
न्यादोनिधेराहितदिष्टिवृद्धिम् ।
लज्जामयासीदिव विश्वकर्मा
लङ्कादिनिर्माणकथाप्रसङ्गे ॥ ६७ ॥

**यामिति** । विश्वकर्मा यादोनिधेः समुद्रस्य आहितदिष्टिवृद्धिं संपादितभाग्यसमृद्धिं यां द्वारकामेकचित्तः एकाग्रमनाः प्रसमीक्ष्य लङ्कादिनिर्माणकथाप्रसङ्गे लङ्कादिकं विश्वकर्मणा निर्मितमिति कथायाः प्रसक्तौ लज्जामयासीदिव अगमदिव । निर्मितसर्वोत्तरनगरस्यापरनगरानिर्माणोदाहरणेन लज्जा संभाविता इवोत्प्रेक्षा ॥

समग्ररत्नौघशुभस्फूर्तिं यां
सनायकां मध्यजुषः त्रिधाम्ना ।

रम्यां हि हृद्यां हृदयेन नूनं
रत्नाकरो रत्नमधत्त भूषाम् ॥ ६८ ॥

**समग्रेति** । समग्ररत्नौघशुभाकार्तिं समृद्धैः मणिनिकरैः मञ्जुलाकाराम् । "शुभं मञ्जुप्रशस्तयोः" इति यादवः । मध्यजुषा मध्यं प्राप्तेन त्रिधाम्ना कृष्णेन सनायकां नाथवतीं नायकरत्नसहितां च "नायको नेतरि श्रेष्ठे हारमध्यमणावपि" इति विश्वः । अत एव हृद्यां हृदयस्य प्रियां यां द्वारकां रत्नाकरः समुद्रः हृदयेन हृदयं लक्षणया स्वान्तरप्रदेशः । तेन उरसा च "हृदयं मानसोरसोः" इति विश्वः । रम्यां भूषां रत्नरमणीयं रत्नमालिकारूपं भूषणं धृतवान् नूनमित्युत्प्रेक्षायां रत्नौघनिर्मितत्वनायकत्वहृदयान्वयरूपेण निमित्तेन तस्याः रत्नसमत्वेन धारणमुत्प्रेक्ष्यते ॥

अभिन्नसत्वान्नभसः परस्मा-
त्क्षीरोदधेरंशुमतश्च बिम्बात् ।
रमासखस्य प्रणिधानभाजां
याभूत्प्रियं व्यक्तिपदं पृथिव्याम् ॥ ६९ ॥

**अभिन्नेति** । या द्वारका प्रणिधानभाजां समाधिभाजां अभिन्नसत्वात् रजस्तमोभ्याममिश्रसत्वगुणरूपात् । "अन्यदारितामिश्रेषु भिन्नमिति" नानार्थरत्नमाला । परस्मान्नभसः परमाकाशाद्वैकुण्ठात् । क्षीरोदधेरंशुमतो बिम्बाच्च प्रियं रमासखस्य लक्ष्मीसहितस्य भगवतः पृथिव्यां व्यक्तिपदं आविर्भावस्थानमभूत् । वैकुण्ठादिस्थानत्रयं भगवतोऽतिप्रियं व्यक्तिपदं प्रसिद्धं तेन भगवतः त्रिधामशब्दवाच्यतापि । ततोऽपि द्वारका प्रियतमेत्यत्रैव भक्तानां सुलभदर्शनम् आसीदित्यर्थः ।

यत्सौधभाजां निशि सुन्दरीणां
मुखेन्दुभिश्चूषितकान्तिमिन्दुम् ।
सद्यः स्वनिष्यन्दसुधाप्रवाहै-
राप्याययामासुरिवेन्दुकान्ताः ॥ ७० ॥

**यत्सौधेति** । यत्सौधभाजः यस्याः सौधं भजमानाः इन्दुकान्ताः चन्द्रोपलाः निशि रात्रौ सुन्दरीणां तत्पुरवनितानां मुखेन्दुभिः मुखान्येवेन्दवः तैः चूषितकान्तिं निष्पीतकान्तिमतिशयितकान्तीनां तेषां सन्निधाने । निष्प्रभतया तैः निष्पीतकान्तित्वे स्थिते तदैव तत्सौधचन्द्रकान्तानां प्रवाहोद्गमः चन्द्राप्यायनार्थमिव जात इत्युत्प्रेक्ष्यते । अनेन सौधाग्राणां चन्द्रमण्डलादप्यौन्नत्यं व्यज्यते । इन्दुकान्ता इत्यनेनेन्दुप्रियाणामिन्दोरपचये तदैव तदाप्यायनार्थप्रवृत्तेरुचितत्वं व्यज्यते । मुखेन्दुभिरित्यत्र नोपमितसमाससंभवः । निष्पीतकान्तिमिति प्रसिद्धचन्द्रस्य निकृष्टकथनप्रस्तावे तत्सादृश्यकथनायोगादिति रूपकसमासो दार्शितः ।

उद्वेलचञ्चत्तुरगोर्मिमाला-
मुद्घोषितामुत्सवतूर्यघोषैः ।
प्रभूतरत्नौघनिधिं पयोधि-
र्यामद्भुतां या च तमन्वकार्षीत् ॥ ७१ ॥

**उद्वेलेति** । उद्वेलं निर्मर्यादं यथा तथा चञ्चन्त्यः चलन्त्यः तुरगाणामूर्मिणामिव मालाः पङ्क्तयो यस्यास्तामुत्सवतूर्यघोषैः उत्सववाद्यध्वनिभिरुद्घोषितां संजातोद्घोषां तारकादित्वादितच् । प्रभूतरत्नौघनिधिं-

प्रचुरमणिनिकरास्पदीभूताम्नद्भुतां द्वारकां पयोधिरन्वकार्षीत् अनुकरोति स्म । या द्वारका च तं पयोधिमन्वकार्षीत् । द्वारकासमुद्रौ तुरगोर्मिमालादिसंपदा परस्परोपमेयात्वभूतामित्यर्थः ॥

यद्वप्रशैलेषु दिवापि सिन्धो-
रास्फालनादुत्पतितैः पृषद्भिः ।
उत्क्षिप्तमुक्ताफलदर्शनीयै-
रालक्ष्यतारौघमभूद्विहायः ॥ ७२ ॥

यद्वप्रेति । यस्या वप्राः प्राकारमूलबन्धा एव शैलाः ते शैला इवेत्युपमितिसमासो वा । तेषु सिन्धोरास्फालनात् पतितैरुत्पतद्भिः उत्क्षिप्तमुक्ताफलदर्शनीयैः उपरि प्रकीर्णैः मौक्तिकैरिव दृश्यैः पृषद्भिः बिन्दुभिः दिवापि विहायः गगनं आलक्ष्यतारौघं समन्तात् दृश्यनक्षत्रनिकरमभूत् । "वप्रोऽस्त्रियां तीरसेतुप्राकारक्षेत्रवाचकः" इति नानार्थरत्नमाला ॥ ७२ ॥

कलत्रपुत्रादिजुषामजस्रं
दीर्घायुषां यत्र सतां जनानाम् ।
धर्मैकभाजामितरे पुमर्थाः
प्रायः स्वयं संनिदधुः स्वभूत्यै ॥ ७३ ॥

कलत्रेति । कलत्रपुत्रादिजुषां दारपुत्रादिसंपन्नानां दीर्घायुषां चिरजीविनाम् अजस्रं धर्मैकभाजां धर्ममेव सेवमानानां यत्र सतां यस्यां विद्यमानानां जनानामितरे पुमर्थाः पशुहिरण्यादयः पुरुषार्थाः । स्वभूत्यै स्वसमृद्ध्यै प्रायो नूनं संनिदधुः आश्रयमहिम्ना स्वेषां समृद्धिर्भवतीति स्वयमेवोपतस्थिरे । अयत्नेन पशुहिरण्यादिप्राप्तिरेव

तेषां सम्बन्ध्यर्थं स्वयमेव गमीनत्वेनोत्प्रेक्ष्यते ॥

रराज सा रामजनार्दनाभ्यां
प्राप्तप्रकाशापि यदुप्रवीरैः ।
सत्येव तारानिकरे त्रिलोकी
चक्षुष्मती चन्द्रदिवाकराभ्याम् ॥ ७४ ॥

रराजेति । सा द्वारका यदुप्रवीरैः यदुश्रेष्ठैरुग्रसेनप्रभृतिभिः प्राप्तप्रकाशापि रामजनार्दनाभ्यां रराज । अतिमात्रमिति भावः । तथा हि । त्रिलोकी तारानिकरे नक्षत्रगणे सत्येव न तु तदभावदशायामित्येवकारार्थः । चन्द्रदिवाकराभ्यां चक्षुष्मती चन्द्रदिवाकराभ्यामेवातितरां प्रकाशत इत्यर्थः ॥ ७४ ॥

प्रभुणा सहस्रवदनेन वर्ण्यतां
द्विगुणैरमुष्य नयनैरवेक्ष्यताम् ।
श्रुतिभिश्च तस्य बहुधा निशम्यता-
माधिकां ततः श्रियमवाप सा पुरी ॥७५॥

प्रभुणेति । सा पुरी सहस्रवदनेन प्रभुणा शेषेण वर्ण्यताममुष्य शेषस्य द्विगुणैः द्वौ गुणावावृत्ती येषां तैः सहस्रद्वयसंख्यैः नयनैरवेक्ष्यताम् । तस्य श्रुतिभिश्च द्विगुणाभिर्निशम्यताम् । ततोऽधिकां शेषस्य वर्णनदर्शनश्रवणेभ्योऽतिशयितां तैरप्यपरिच्छेद्यां श्रियं शोभामवाप । मञ्जुभाषिणीवृत्तम् । 'सजसाजगौ भवति मञ्जुभाषिणी' इति लक्षणात् ॥७५॥

स्वयमजनि किमत्र श्वेतमेवान्तरीपं
परिणतमुत किंचिद्भागधेयं पृथिव्याः ।

वरुणनगरमन्यद्वारिधेरुत्थितं वा
किमिदमिति पुरं तत्कीर्तयन्ति स्म पौराः ॥

**स्वयमिति** । पौरात्पुरवासिनः अत्र समुद्रे श्वेतमन्तरीपं क्षीरसमुद्रमध्यवर्तिश्वेतद्वीप एव स्वयमजनि स्वयमेव प्रादुर्भूतम् । अथवा पृथिव्याः भूमेः किंचिदपरिच्छेद्यं भागधेयं भाग्यं परिणतं एतत्पुररूपेण परिणामं प्राप्तं वा । यद्वा अन्यन्मेरुस्थितादपरं वारिधेः समुद्रादुत्थितं वरुणनगरं वा । समुद्रस्य वरुणालयत्वप्रसिद्धेरिन्द्रादीन् विहाय तन्नगरत्वेन तर्कः । किमिदं पुरं वितर्कितप्रकाराणामन्यतममन्यद्वा इति तत्पुरं कीर्तयन्ति स्म । कृतसंशब्दन इति धातुः चौरादिकः अजनीति जनिधातोः कर्तरि लुङ् । दीपजनबुधेत्यादिना तत्र वैकल्पिकश्चिण् । पौरा इत्यनेन चिरपरिचितानामपि सदा विस्मयावहमिति पुरस्यात्यद्भुतत्वं व्यज्यते । मालिनीवृत्तम् 'ननमयययुतेयं मालिनीभोगिलोकैः' इति लक्षणात् ॥ ७६ ॥

रामप्रष्ठैरधिवसति सा राजधानी जगाहे
लोकाधीशे सह बहुमतैर्लोकपालैरिवान्यैः ।
आश्चर्याणां प्रकृतिरियमित्यद्भुतावेशयोग्या-
ममत्यूहामनितरतुलारोहणीयामभिख्याम् ॥

**रामप्रष्ठैरिति** । सा राजधानी द्वारका लोकाधीशे जगदीशे कृष्णे अन्यैः प्रसिद्धेन्द्रादिभिन्नैः लोकपालैरिव स्थितैः बहुमतैः पूजितैः रामः प्रष्ठः अग्रगामी येषाम् । प्रष्ठोऽग्रगामिनीति निपातः । तैः बलदेवादिभिः सह अधिवसति सति इयं पुरी आश्चर्याणामद्भुतपदार्थानां प्रकृतिः कारणं माता वा । उभयथाप्युत्पत्तिभूरित्यर्थः । " प्रकृतिः पञ्च-

भूतेषु स्वभावे सचिवादिषु । प्रधाने कारणे गुह्ये जन्तौ छन्दसि मातरि ” इति रत्नमाला । इत्युक्तहेतोरद्भुतावेशयोग्यां द्रष्टॄणामद्भुतरसावेशसंपादनोचितां अप्रत्यूहां पदार्थानां शोभायां तदधिकवस्तुसद्भावः प्रत्यूहो विघ्नः तत्सन्निधाने शोभीया अप्रतीतेः तद्रहिताम् । स्वातिशायिवस्त्वन्तररहितामिति यावत् । अनितरतुलारोहणीयाम् । तुलारोहणं प्रयोजनमस्येति तुलारोहणीया तोलनीयस्य सुवर्णादेः परिमाणज्ञानाय तेन सह तुलायामारोहणीयशब्देन उपमेयगुणज्ञापकत्वादुपचारादुपमानमुच्यते । इतरत्तुलारोहणीयमुपमानं नास्ति यस्यास्तां निःसमानामिति यावत् । एवंभूतामाभिख्यां शोभां जगाहे गाहते स्म । मन्दाक्रान्तावृत्तम् ‘मन्दाक्रान्ता जलधिषडगैः म्भौनतौताद्गुरू चेत्’ इति लक्षणात् ॥

तन्मध्ये विरचितशिल्पमेरुकल्पं
वैचित्र्यादपहृतवैजयन्तगर्वम् ।
प्रस्पष्टं निजमिव पारमेष्ठ्यमुर्व्यां
प्रासादं प्रभुरधिवासयांचकार ॥ ७८ ॥

**तन्मध्य इति ।** प्रभुः कृष्णः तन्मध्ये तस्याः द्वारकाया मध्ये विरचितशिल्पमेरुकल्पं विरचितशिल्पं कृतप्रासादाकारनिर्माणं मेरुमिव स्थितं कल्पप्रत्ययस्योपमायां प्रयुज्यमानस्याप्यीषदर्थे ईषद्वैचित्र्यादिह तूत्प्रेक्षायां पर्यवसानम् । वैचित्र्यात् विचित्रत्वाद्धेतोः अपहृतो वैजयन्तस्येन्द्रप्रासादस्य गर्वो येन तम् । वैजयन्तस्य शोभातिशय एव तद्गर्वत्वेनाध्यवसितः ततश्च ततोऽप्याधिकशोभाशालिनमिति भावः । उर्व्यां भूमौ प्रस्पष्टं व्यक्तं निजम् आत्मीयं पारमेष्ठ्यं परमे स्थाने तिष्ठतीति परमेष्ठी तस्य भावः पारमेष्ठ्यं तादेव स्थितं प्रासादं राजगृहम् । “ हर्म्यादिर्धनिनां वासः प्रासादो

देवभूभुजाम्" इत्यमरः । अधिवासयांचकार अधिवासं कृतवान् स्वनिवासेन सुरभयांचकारेति वा । "अधिवासो निवासे च संस्कारे धूपनादिभिः" इति विश्वः । प्रहर्षिणीवृत्तम्, "म्नौ ज्रौगस्त्रिदशयतिः प्रहर्षिणीयम्" इति लक्षणात् ॥ ७८ ॥

रामः पुनर्व्रजमुपेत्य विहारभेदै-
राश्वासयन्सहचरैः सुहृदश्च सर्वान् ।
विश्राणितां दुहितरं वरुणेन विन्द-
न्सीरावकृष्टयमुनास्नपितो विजह्रे ॥ ७९ ॥

**राम इति** । रामो बलदेवः पुनर्व्रजमुपेत्य पुनरपि नन्दस्य गोकुलं प्राप्य सर्वान् सुहृदश्च सर्वानपि गोपकुमाररूपान् सखीन् सहचरैः तत्रत्यभृत्यादिरूपैः प्राक्तनसहचरैः सह विहारभेदैः क्रीडाविशेषैः आश्वासयन् चिरविरहजदुःखमपनीय प्रीणयन् वरुणेन विश्राणितां दुहितरं तस्य पुत्रीं वारुणीं विन्दन् लभमानः उपभुञ्जानः सीरेणावकृष्टया यमुनया स्नपितश्च विजह्रे विहरते स्म । बलदेवप्रीतये वरुणप्रेरणेन बृन्दावने कदम्बवृक्षोदरात् प्रवाहरूपेण निर्गता वारुणी तेनोपभुक्तेति पौराणिकी कथा विश्राणितामित्यनेन विशेषणेन दर्शिता । तत्र विहरमाणेन तेन तत्रैव जलक्रीडार्थमाहूतामप्यनागच्छन्तीं यमुनां कोपात् सीरेणाकृष्य जलक्रीडा कृतेति कथा सीरावकृष्टेत्यादिविशेषणेन दर्शिता । वसन्ततिलकावृत्तम् "उक्ता वसन्ततिलका तभजाजगौगः" इति लक्षणात् ॥ ७९ ॥

प्रत्यश्नमभ्रिमकभूतवतोऽतिदूरं
दग्धुश्च कूलमिव दक्षिणमस्त्रभूम्ना ।

आकर्षतश्च सरितं सवितृप्रसूतां
रामस्य तस्य शुशुभे रसिकस्य लीला ॥८०॥

प्रत्यश्चमिति । प्रत्यश्चमब्धिं पश्चिमसमुद्रं अतिदूरमवधूतवतः जामदग्न्यरामरूपेण तपोवकाशार्थमतिदूरं निरस्तवतः, दक्षिणमब्धिम् अनभूम्ना आग्नेयास्त्रमहिम्ना कूलमिव दग्धुः दशरथरामरूपेण सम्यक् दग्धवतश्च । साधुकारिणि तृन् प्रत्ययः । अत एव तद्योगे द्वितीया चोपपन्ना । सवितृप्रसूतां सूर्योत्पन्नां सरितं यमुनां अनेन रूपेण कर्षतश्च रसिकस्य क्रीडारसवतः तस्य रामस्य क्रीडा शुशुभे शोभते स्म ॥ ८० ॥

पद्मयोनिवचनादुपनीतां
प्राक्तनीं प्रियतमामिव कान्तिम् ।
रेवतस्य तनयामनुरूपां
रेवतीं च परिणीय स रेमे ॥ ८१ ॥

इति श्रीमत्कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
यादवाभ्युदये काव्यरत्ने
एकादशः सर्गः ॥

पद्मयोनीति । स बलदेवः पद्मयोनेः ब्रह्मणः वचनादुपनीतां उपाहृताम्, प्राक्तनीं प्राचीनां शेषमूर्तावनुवर्तमानां प्रियतमां कान्तिमिव स्थिताम्, अत एवानुरूपां स्वसदृशीं रेवतस्य कन्यां तनयां रेवतीं परिणीय परिगृह्य च रेमे चिक्रीड । "उपास्यते स्वयं कान्त्या

यो वारुण्या च मूर्तया" इति श्रीविष्णुपुराणे शेषवर्णनायां दर्शनाच्छेषस्य प्रियतमा कान्तिरित्यवसीयते । चकारो बलदेवावतारे तस्या अपि परिग्रहोऽस्तीति समुच्चयोपमासूचनार्थः । तथा श्रीविष्णुपुराणे—"ततः स्नातस्य वै कान्तिराजगाम महात्मनः । अवतंसोत्पलं चारु गृहीत्वैकं च कुण्डलम् ॥ कृतावतंसः स तदा चारुकुण्डलभूषितः । नीलाम्बरधरः स्रग्वी शुशुभे कान्तिसंयुतः" इति । रेवतो नाम इक्ष्वाकुवंश्यः राजा । स्वस्य कन्यां रेवतीं कस्मै दद्यामिति संदिहानो ब्रह्मलोकमधिगम्य ब्रह्मसदसि गन्धर्वगानप्रवृत्त्या क्षणमवसरं प्रतीक्ष्य ततः कस्मै कन्यामिमां दद्यामिति ब्रह्माणं पप्रच्छ । स च मत्सभायां गन्धर्वगानं शृण्वतः तव भूतले बहूनि चतुर्युगान्यतीतानि ; त्वद्विचारिता वराः सर्वे व्यतीताः । सांप्रतं भगवान् कृष्णबलदेवरूपेण द्वारकामध्यास्ते । तत्र बलदेवाय दातव्येयं कन्येति तं शशास । तच्छासनात् तामुपाहृत्य बलदेवाय ददाविति पौराणिकी कथा पद्मयोनीत्यादिना दर्शिता । स्वागता वृत्तम् । "स्वागतेति रनभाद्गुरुयुग्मम्" इति लक्षणात् ॥ ८१ ॥

इति श्रीमद्भरद्वाजकुलतिलकविश्वजिद्याजि श्रीरङ्गराजाध्वरिवरसूनुना श्रीमदप्पयदीक्षितेन विरचिते यादवाभ्युदयव्याख्याने

एकादशः सर्गः ।



# द्वादशः सर्गः ॥

तथाविधानन्दमहापयोधे-
स्तरङ्गवृत्त्या भजतोऽवतारान् ।
अशेषरूपेष्वनुरूपरूपा
देवी जगन्नेतुरनुप्रजज्ञे ॥ १ ॥

अथ रुक्मिणीपरिणयमुपोद्धातेन प्रस्तौति । तथाविधेति । तथाविधस्य "स एको ब्रह्मण आनन्दः" इत्यादिश्रुतिसिद्धप्रकारस्य निरतिशयोत्कर्षस्यानन्दस्य महाम्बुधेः महाम्बुधिवत् विपुलाश्रयस्य तरङ्गवृत्त्या तरङ्गाणां रीत्या अवतारान् भजतः अम्बुधेस्तरङ्गैरिव स्थितैः स्वांशभेदैः मत्स्यकूर्माद्यवतारान् परिगृह्णतो जगन्नेतुः लोकनायकस्य कृष्णस्य अशेषरूपेषु सर्वेष्वप्यवतारादिषु तदनुरूपरूपा समानाकारा तत्तदवताराद्यनुरूपाकारा गृहिणी देवी श्रीमहालक्ष्मीः "देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी । विष्णोर्देहानुरूपां वै करोत्येषात्मनस्तनुम्" इति तामधिकृत्य पुराणवचनं सा अनुप्रजज्ञे तदवतारानन्तरमवतीर्णाभूत् ॥ १ ॥

सा तस्य नित्योदितदिव्यधाम्नः
पत्युः प्रिया भानुमतः प्रभेव ।

अध्यासितुर्द्वारवतीमदूरा-
अर्क्कि शुभां प्राप विदर्भदेशे ॥ २ ॥

कुत्र देशे अवतीर्णा? तत्राह—सौ इति । नित्योदितदिव्यधाम्नः सर्वदाविर्भूताप्राकृततैजसः पत्युः भगवतः नित्योदितदिव्यधाम्नः सदा स्फुरितगगनभवतेजसः भानुमतः प्रभेव स्थिता तद्वन्नित्या अनपायिनी प्रिया दयिता लक्ष्मीः द्वारवतीमध्यासितुः द्वारकामध्यासीनस्य तस्य पत्युः अदूरात्समीपे विदर्भदेशे विदर्भाणां क्षत्रियविशेषाणां निवासः जनपदः विदर्भः । "निवासार्थप्रत्ययस्य जनपदे लुबिति लुपियुक्तवद्व्यक्तिवचन" इति नित्यबहुवचनान्तता । विदर्भा इति देशो विदर्भदेशः तस्मिन् । शुभां प्राणिनां श्रेयस्करीं व्यक्तिमवतारं प्राप । "अधिशीङ्स्थासां कर्म" इति द्वारवत्याः कर्मता । अध्यासितुरित्यत्र तृन् प्रत्यय इति तद्योगे षष्ठीनिषेधात् कर्मणि द्वितीया । अदूरादिति "दूरान्तिकार्थेभ्यो द्वितीया च" इति चकारात् पञ्चमी । यद्यपि वृत्तौ दूरतार्थेभ्यः प्रातिपदिकार्थमात्रे द्वितीयादिविभक्तय इत्युक्तम्, तथापि भाष्ये दूरादावसतान्सूत्रम् दूरात्पादावनेजनम् इत्यधिकरणेऽपि पञ्चमी दृश्यते । कैयटेनापि व्याख्यातमावसथस्य दूर इत्यर्थ इति । शुभां शुभकरीं शुभशब्दात् तत्करोतीति ण्यन्तात् प्रचाद्यचि णिलोपः ॥

शिखण्डकं निष्प्रतिमं श्रुतीनां
शृङ्गारलीलोपमविश्वकृत्यम् ।
अधीयते तन्निक्षुन्नं स्वभावा-
दन्योन्यजीवातुमनन्यभोग्यम् ॥ ३ ॥

**शिखण्डकमिति**। श्रुतीनां निष्प्रतिमं शिखण्डकमनुपममुत्तमाङ्गाभरणं अखिलवेदान्ततात्पर्यगोचरमिति यावत्। शृङ्गारलीलोपमविश्वकृत्यं शृङ्गारलीलावदनायाससाध्यविनोदरूपजगत्सृष्टिसंहारादिकृत्यम्। अनन्यभोग्यम् अनन्यानाम् एकान्तिनाम् उपभोग्यं तत् लक्ष्मीनारायणात्मकं मिथुनं स्वभावादन्योन्यजीवातुम् अन्योन्यजीवनौषधं स्वरूपसिद्धौ कार्यकरत्वे चान्योन्यसापेक्षमधीयते। "अहंता ब्रह्मणस्तस्य साहमस्मि सनातनी। आत्मा स सर्वभूतानामहंभूतो हरिः स्मृतः। अहंतया विनाहं हि निरुपाख्यो न सिध्यति। अहमर्थं विनाहंता निराधारा न सिध्यति। योऽसौ नारायणो देवः परमात्मा सनातनः। अहंभावात्मिका शक्तिस्तस्य तद्धर्मधर्मिणी। नैव शक्त्या विना कश्चित् शक्तिमानस्ति कारणम्। न च शक्तिमता शक्तिः विना काप्यवतिष्ठते" इत्यादिष्वधीयते। अतो भगवदविनाभूतस्वभावत्वात् तदवतारे सति साप्यवतीर्णेति भावः॥ ३॥

**दयेव नित्यं दयिता त्रिधाम्नः**
**सर्वेषु भावेषु समानभावा।**
**परावराणां जननी प्रजाना-**
**मासीद्विदर्भाधिपतेरपत्यम्॥ ४॥**

कुतोऽवतीर्णा सा? तत्राह— **दयेति**। त्रिधाम्नः त्रीणि वैकुण्ठरविबिम्बदुग्धाम्बुधिरूपाणि धामानि स्थानानि यस्य तस्य पुरुषोत्तमस्य नित्यं दयेव स्थिता सदा भक्तेषु वात्सल्याद्यभिव्यक्त्यापादकतया करुणेव स्थिता सर्वेषु भावेषु सर्वपदार्थेषु समानभावा सर्वान्तर्यामिणीति समानसत्ताका। यद्वा सर्वेषु कृत्येषु जगत्सृष्ट्यादिषु

तेन समानाभिप्राया "भावो लीला क्रिया चेष्टा भूत्यभिप्रायजन्तुषु । पदार्थमात्रे सत्तायामात्मयोनिस्वभावयोः" इति वैजयन्ती । परावराणां प्रजानां भूतभविष्यदात्मनाम् उत्कृष्टापकृष्टरूपाणां सर्वेषां प्राणिनां जननी माता । एवंभूता दयिता तस्य पुरुषोत्तमस्य प्रिया विदर्भाधिपतेः विदर्भदेशाधिपतेः भीष्मकस्यापत्यमासीत् । ततोऽवतीर्णेत्यर्थः ॥

महीतलान्मैथिलसीरकृष्टा-
त्क्षीरोदधेराहितमन्थशैलात् ।
भृगूद्वहात्ख्यातिमतश्च याभू-
त्सा भीष्मकादभ्युदियाय भूयः ॥ ५ ॥

महीतलादिति । मैथिलसीरकृष्टात् जनकराजस्य लाङ्गलेन कृष्टान्महीतलात् यज्ञभूमेरधःप्रदेशात् । 'तलं स्वरूपाधरयोः' इति विश्वः । आहितमन्थशैलात् आहितो निपातितः मन्थरूपशैलः मन्दरपर्वतो यस्मिन् तस्मात् क्षीरोदधेः ख्यातिमतः ख्यातिसंज्ञाककलत्रवतः । भृगूद्वहात् भृगूणां भृगुवंश्यानामुद्वहः श्रेष्ठः कूटस्थः अग्रजः तस्माद्याभूत् सा महालक्ष्मीः भूयः पुनरपि भीष्मकादभ्युदियाय प्रादुर्भूता । अत्र महीतलादित्यादौ पाठक्रमेणावतारो न विवक्षितः । 'भृगोः ख्यात्यां समुत्पन्ना श्रीः पूर्वमुदधेः पुनः । देवदानवयत्नेन प्रसूतामृतमन्थने' इत्यादि पुराणे क्रमान्तरवचनात् ॥ ५ ॥

अमन्यतैनां तनयां स राजा
रुक्मश्च मोहादनुजामजन्याम् ।

यामेकपत्नीमनघस्य पुंसः
प्रजासृजां मातरमामनन्ति ॥ ६ ॥

**अमन्यतेति** । स राजा भीष्मकः अजन्यामजाम् भव्यगेये-त्यादि सूत्रेण कर्तरि जन्यशब्दः साधुः । एनां रुक्मिणीं मोहात् स्वस्मादिच्छावतारमात्रेण भ्रमात् तनयाममन्यत । रुक्मः तत्पुत्रश्च मोहादनुजां स्वस्यावरजाममन्यत । अनघस्यापहतपाप्मनः पुंसः पुरुषोत्तमस्य 'एष आत्मा अपहतपाप्मा' इति श्रुतेः । एकपत्नीं मुख्यमहिषीं यां देवीं प्रजासृजां प्रतिकल्पं भिन्नानां ब्रह्मणाम् । मातरमामनन्ति । श्रुतय इति शेषः । तामिति पूर्वार्धेन संबन्धः तथाभूतायां तस्यां तनयेत्यनुजेति बुद्धिर्भ्रममात्रमिति युक्तमित्याशयः ॥ ६ ॥

त्यक्त्वापराः स्त्रीर्गुणराशिरेनां
शरण्यभूतां शरणं प्रपेदे ।
प्रायेण दोषैरविविक्तवासा-
द्भीतः स्वयं भीष्मकराजकन्याम् ॥ ७ ॥

**त्यक्त्वेति** । गुणराशिः गुणानां सौन्दर्यसौकुमार्यादीनां राशिः प्रायेण नूनं दोषैरविविक्तवासात्, सहवासात् भीतः सन् स्त्रीः अपराः इतराः स्त्रियः त्यक्त्वा इतरासु मात्रयापि दोषानुवृत्तिरस्तीति धियेति भावः । शरण्यभूतां रक्षकभूतां भीष्मकराजकन्यामेनां रुक्मिणीं शरणं प्रपेदे । सदाश्रये सत्यसदाश्रयग्रहणस्यानुचितत्वादिति भावः । "स्त्रीति वा शसोः" इति इयङादेशविकल्पनात् पूर्वसवर्णदीर्घः । शर-

ध्येति तत्र साधुरिति सूत्रेण प्राग्दीव्यतीयो यत्प्रत्ययः । 'शरणं स्याद्रक्षितरि रक्षिणे मन्दिरे भने' इति रत्नमाला ॥ ७ ॥

आरब्धदेहामिव भागधेयै-
रक्षीणि लक्ष्यान्तरतो नियन्त्रीम् ।
सुतामिमां प्राप्य सुधामिवान्या-
ममर्त्यकल्पौ पितरावभूताम् ॥ ८ ॥

**आरब्धेति** । भागधेयैः द्रष्टॄणां भाग्यैरारब्धदेहामिव स्थितां अक्षीणि लोचनानि लक्ष्यान्तरतो नियन्त्रीम् विषयान्तरेभ्यो व्यावर्तयन्तीमिमां सुतां रुक्मिणीमन्यां प्रसिद्धेतरां सुधामिव प्राप्य, पितरौ अमर्त्यकल्पौ देवसदृशावभूताम् । देववद्दिव्यसुखमन्वभूतामित्यर्थः । सुधामिवेत्युत्प्रेक्षणेन अमर्त्यसादृश्यस्य औचित्यमुपपाद्यते । नियन्त्रीमिति तृन् प्रत्ययः ; अत एव तद्योगे द्वितीया । पितराविति पितामात्रेत्येकशेषः ॥

अनन्यवृत्त्या घनतामुपेतै-
रप्रौढसूर्येन्दुमयूखजालैः ।
सुवर्णरत्नैरथवा प्रक्लृप्तां
सुतां सुजाताकृतिमन्वभूताम् ॥ ९ ॥

**अनन्येति** । सुजाताकृतिमभिजातरूपां सुतां रुक्मिणीमनन्यवृत्त्या द्रव्यान्तरमिश्रणेन तथा तेजो न भवेदिति भावः । घनतामुपेतैः काठिन्यं प्राप्तैः । "घनः कठिनसंघातमेघकाठिन्यमुद्गरः" इति यादवः । अप्रौढसूर्येन्दुमयूखजालैः बालैः सूर्यचन्द्रयोः किरणसमूहैः । अथवा सुवर्णरत्नैः सुवर्णेन पद्मरागादिरत्नैश्च प्रक्लृप्तां निर्मितां कल्पमूर्तां तस्याः

तेजोविशेषं दृष्ट्वा तथामन्येतामित्यर्थः। पितराविति पूर्वश्लोकात्कर्तुरनुषङ्गः॥ ९॥

महीयसीं मङ्गळदीपमालां
विद्युत्प्रकाशा विदधे कुमारी।
आकल्परत्नांशु तिरस्करिण्या
दीप्त्या रजन्यामपि दीनभासम्॥ १०॥

**महीयसीमिति**। विद्युत्प्रकाशा विद्युतः प्रकाश इव प्रकाशो दीप्तिः यस्याः सा, विद्युत्सदृशीत्वात्। "प्रकाशोऽर्चिषि दीप्तिर्वा नातुल्यस्फुटयोस्त्रिषु"। इति यादवः। कुमारी रुक्मिणी आकल्परत्नांशुतिरस्करिण्या आभरणरत्नकिरणानामाच्छादन्या। करोतेः करणे ल्युटित्वात् ङीप्। दीप्त्या अङ्गप्रभया महीयसीं महत्तरां मङ्गलदीपमालां मङ्गलार्थं दीपपङ्क्तिम्। रजन्यामपि दीनभासं अभिभवात् क्षीणप्रभां विदधे॥ १०॥

कलामिवार्धामकठोरधाम्नः
पुण्योदयानामिव पूर्वचर्याम्।
प्ररोहवेलामिव कान्तिवल्ल्याः
प्रैक्षन्त शुद्धान्तमृगीदृशस्ताम्॥ ११॥

**कलामिति**। शुद्धान्तमृगीदृशः भीष्मकावरोधस्त्रियः तां रुक्मिणीम् अकठोरधाम्नः अनुष्णतेजसः चन्द्रस्यार्धां एकदेशरूपां कलामिव पुण्योदयानां भोक्तृपुण्यसमृद्धीनां पूर्वचर्यां पुनश्चर्यामिव। पूर्वचर्या नाम मान्त्रिकैः मन्त्रफलाभिमुख्यसिद्धये प्रथमं क्रियमाणा मन्त्रसेवा।

कान्तिरेव वर्तिः तस्याः प्ररोहवेलामिव प्ररोहस्य मर्यादामिव। यतोऽधिकमन्यत्र स्फीततया न प्ररोहति सा मर्यादा। 'अब्ध्यंबु-विकृतौ वेला कालमर्यादयोरपि' इत्यमरः। तामिव प्रैक्षन्त। अत्राति बाल्येऽपि रमणीयतमत्वात् तथोत्प्रेक्षा। यथा मन्त्रविदां मन्त्रपुरश्चर्या स्वापेक्षितफलार्थमन्त्रविनियोगसामर्थ्यादानेन फलसंनिकर्षसम्पादिनी तथा भोक्तृपुण्यसमृद्धीनां तन्निर्वर्त्य फलसंनिकर्षसंपादिनीत्वात् हेतोः द्वितीया। कान्तेरुत्कर्षविश्रान्तिभूमित्वात् तृतीयेति भेदः॥ ११॥

आत्माधिकारादधिकामवस्था-
मयत्नतो नूनमवाप्तुकामा।
वार्तानभिज्ञे वयसि स्थितां तां
वाग्देवता वन्दिमुखे ववन्दे॥ १२॥

आत्मेति। वाग्देवता सरस्वती आत्मनः स्वस्याधिकारात् तदानीं-तनात् वागाधिपत्यात् अधिकामवस्थां दशामाधिक्यं वागाधिपत्यम् अयत्नतो यत्नमननुभूय अवाप्तुकामा अवाप्तुं कामो यस्यास्तथाभूता सती। 'तुं काममनसोरपि' इति मलोपः। वार्तानभिज्ञे व्याकरणानभिज्ञे वयसि अतिशैशवे स्थितां देवीम्। वन्दिमुखे स्तुतिपाठकानां मुखे स्थित्वा ववन्दे तुष्टुवे। शिशवः स्तुतिमात्रेण प्रलोभिताः देहीति प्रष्टं प्रयच्छन्तीति भावः॥ १२॥

प्रदित्समानेन हरेरभीष्टं
कामेन सा कल्पलतेव सृष्टा।

पित्रोरिवानन्ददृशां प्रजाना-
माशंसया सार्धमवाप वृद्धिम् ॥ १३ ॥

प्रदित्समानेनेति । हरेः कृष्णस्याभीष्टं प्रदित्समानेन प्रदातुमिच्छता कामेन मन्मथेन सृष्टा कल्पलतेव स्थिता सा रुक्मिणी पित्रोरिवानन्यदृशाम् अनितरदृष्टीनां प्रजानामाशंसया सार्धं वृद्धिमवाप । अस्यां वर्धमानायां पित्रोरन्येषां च वाञ्छा सदैवाभिवृद्धेत्यर्थः । अनेनास्या वृद्धौ लावण्यादिगुणोऽपि सर्वेषां वाञ्छाहेतुरुत्तरोत्तरं प्रवृद्ध इति व्यज्यते । हरेरिति संबन्धसामान्यविवक्षया षष्ठी ॥ १३ ॥

पद्मादिरेखाप्रथमानभूमा
निर्धार्यमाणा निगमैरभिज्ञैः ।
तदङ्घ्रिविन्यासमिषेण जज्ञे
भूमेस्तदा भूषणपाङ्क्तिरग्र्या ॥ १४ ॥

पद्मादीति । तदा तस्या वृद्धिदशायां तदङ्घ्रिविन्यासमिषेण तस्याः संचाराभ्यासे चरणयोः विन्यासस्य व्याजेन पद्मादिरेखाप्रथमानभूमा पद्मध्वजकलशादिरूपाभिः साम्राज्यलक्षणरेखाभिः प्रकाशमानमहिमा । अभिज्ञैः निगमैः वेदैः निर्धार्यमाणा अन्येषां तन्महिमानभिज्ञत्वादनिर्धार्येति भावः । अग्र्या उत्तमा भूषणपाङ्क्तिः जज्ञे जाता ॥ १४ ॥

अदृश्यभेदैरतिसूक्ष्मभावा-
ज्जज्ञे जगन्मङ्गलतां दधानैः ।

विहारलौल्याद्विषयेषु तस्याः
गतेषु वाक्येषु च नृत्तगीतैः ॥ १५ ॥

अलभ्येति । विहारलौल्यात् क्रीडाभिलाषात् विषयेषु संभ्रमवशात् विभिन्नरूपेषु तस्याः गतेषु वाक्येषु च गमनेषु वचनेषु च अतिसूक्ष्मभावादत्यन्तसूक्ष्मत्वाददृश्यभेदैः अविज्ञेयावान्तरविशेषैः जगन्मङ्गलतां दधानैः अनुचिन्तनादिना लोकानां श्रेयस्करत्वं धारयद्भिः नृत्तगीतैः गतेषु नृत्तैः वाक्येषु गीतैश्च । जज्ञे जातम् । भावे लिट् । अखिलविधैश्वर्याः तस्याः गमनवचनानि सदा नृत्तगीतप्रभेदरूपाण्येवेत्यर्थः ॥ १५ ॥

यदप्सरः पाणिसरोजमुक्तं
प्रसूनवर्षं निपपात तस्याम् ।
अपूरि तस्यैव रजोभिरग्र्यै-
रपांसुला पांसुविहारवाञ्छाम् ॥ १६ ॥

यदिति । अप्सरःपाणिसरोजमुक्तं तस्याः प्रसादमिच्छन्तीनामप्सरसां पाणिपद्मैः मुक्तं यत्प्रसूनवर्षं तस्यां निपपात । तस्य प्रसूनवर्षस्य अग्र्यैरुत्तमैः रजोभिः परागैरेवापांसुला पतिव्रता सा पांसुविहारवाञ्छां पांसुक्रीडाभिलाषम् अपूरि पूरितवती । दीपजनबुधेत्यादिना वैकल्पिकः कर्तरि णिच् । तथा समृद्धं पुष्पवर्षं पपातेत्यर्थः ॥ १६ ॥

यदृच्छया तत्र पुरागजालै-
र्यानेव सः केलिगृहानकार्षीत् ।

ततः परं त्वष्टुरमी समीची
महेन्द्रशालाविधिमातृकाभूत् ॥ १७ ॥

यदृच्छयेति । तत्र विदर्भनगरे सा रुक्मिणी यदृच्छया स्वेच्छया । तनु शिल्पशास्त्रपर्यालोचनया । 'स्वेच्छा स्वच्छन्दस्वैरिताचेरिताः समाः' इति केशवः । परागजालैः रेणुसमूहैः यानेव केलीगृहान् क्रीडामन्दिराणि । 'गृहाः पुंसि च भूम्न्येव' इति बहुत्वे विकल्पितम् । पुंस्त्वं अकार्षीत् कृतवती । अमी केलीगृहा एव त्वष्टुः विश्वकर्मणः ततःपरं तन्निर्माणानन्तरं समीची समन्तादञ्चति गच्छतीति समीची सर्वविधगृहावान्तरभेदविषया महेन्द्रशालाविधेरिन्द्रगृहनिर्माणस्य मातृकासीत् । विधेयप्राधान्येन आसीदित्येकवचननिर्देशः । "वासः कूटो द्वयोः शाला" इति गृहपर्यायेष्वमरः । अखिलविद्येश्वर्या तया स्वेच्छामात्रेण कृतान्यपि केलीगृहाणि लक्षणसौष्ठव्यात् विश्वकर्मणः तदनन्तरं दिव्यगृहनिर्माणेषु मातृकारूपाण्यासन्नित्यर्थः । समीचीति संपूर्वादञ्चतेः क्विप् । अनिदितामिति नकारलोपः समः समिरिति सूत्रेण समित्यस्य समीत्यादेशः । अञ्चतेश्चोपसंख्यानामिति ङीप् । अच इत्यकारलोपः चाविति दीर्घः ॥ १७ ॥

चतुर्दशैतानि जगन्ति यस्याः
क्षेमाश्रितं क्रीडनकं बभूव ।
पर्याप्तलीला मुमुदे तदैषा
पाञ्चालिकापञ्जरशारिकाद्यैः ॥ १८ ॥

चतुर्दशेति । चतुर्दशसंख्याकानि जगन्ति यस्या देव्याः क्षेमा-

श्रितं रक्षां प्राप्तं क्रीडनकं क्रीडोपकरणं बभूव । पूर्ववद्विधेयप्राधान्येन बभूवेत्येकवचनम् । एषा तदा बालक्रीडासमये पाञ्चालिकापञ्जरशारिकाद्यैः पाञ्चालिका गजदन्तादिनिर्मिता योषा पञ्जरशारिकाः पक्षिविशेषाः तत्प्रभृतिभिः पर्याप्तलीला समाप्तलीला सती मुमुदे । यस्यां निखिलान्यपि जगन्ति लीलया अपर्याप्तानि । आदरेण संरक्ष्यमाणानि क्रीडनकानि बभूवुः सैव पाञ्चालिकाभिरपि समाप्तलीलासीदिति तस्या मनुष्यभवाभिनयसीमा दर्शिता ॥ १८ ॥

आस्वादनीयान्यधिकं श्रुतीनां
मुग्धाभिजातानि वचांसि तस्याः ।
प्रायेण लौल्यादधिकृत्य खिन्ना
विधिप्रिया व्याहरतान्यभाषाः ॥ १९ ॥

**आस्वादनीयानीति** । श्रुतीनां वेदानामास्वादनीयानि अतिरहस्यार्थगोचरत्वात् तेषामपि श्लाघनीयानि मुग्धानि शैशवकलानि अभिजातानि कुलीनानि व्याकरणसंस्कृतानि । "अभिजातः स्थिते न्याय्ये कुलीनप्राप्तयोरपि" इति विश्वः । तस्याः वचांसि प्रायेण नूनं लौल्याच्चापलादधिकृत्याभ्यस्य खिन्ना तथा वक्तुमसामर्थ्यात् खेदवती विधिप्रिया सरस्वती अन्याः भाषाः संस्कृतव्यतिरिक्ताः प्राकृतादिभाषाः व्याहरत व्याहृतवती । संस्कृते रुक्मिणीमनुकर्तुमसामर्थ्येन संस्कृतं व्याहर्तुं लज्जया स्वस्य व्यवहारार्थं भाषान्तराणि सृष्ट्वा व्याहृतवती । नूनमित्युत्प्रेक्ष्यते । लोके हि अविप्लुतसंस्कृतवेगशालिनां पुरतो मन्दसंस्कृताः संस्कृतं वक्तुं त्रपमाणा भाषान्तराण्येव व्याहरन्तीति भावः ॥ १९ ॥

अविप्लुतव्याकरणानि तस्याः
क्रमेण शिक्षानियताक्षराणि ।
अनुश्रवाणामनघप्रवृत्ते-
रादेशदायीनि वचांस्यभुवन् ॥ २० ॥

**अविप्लुतेति** । अनघप्रवृत्तेः मनोज्ञव्यापारायाः तस्याः रुक्मिण्याः क्रमेण कलापरिपाट्या अविप्लुतव्याकरणानि व्याकरणानुरोधीनि शिक्षानियताक्षराणि शिक्षया वेदानां वर्णनिर्णायकाङ्गेन निश्चिताक्षराणि । 'नियतं निश्चितं मतम्' इति हलायुधः । एवंभूतानि वचांसि अनुश्रवाणां वेदानामादेशदायीन्यभूवन् । शब्दतोऽर्थतश्च ततोऽप्यधिकान्यभूवन्नित्यर्थः ॥ २० ॥

विभूतयस्तत्र विशांपतीना-
मात्मीयया देवतयावतीर्णाः ।
स्वचिह्नभेदान्परिबर्हयन्त्यः
प्रपेदिरे तत्परिवारभावम् ॥ २१ ॥

**विभूतय इति** । तत्र भीष्मनगरे विशांपतीनामिन्द्रादिदिक्पालानां विभूतयः अणिमादिसंपत्तयः आत्मीयया स्वकीयया देवतया अधिदेवतया अवतीर्णाः सत्यः स्वचिह्नभेदान् स्वलाञ्छनविशेषान् परिबर्हयन्त्यः श्वेतछत्रबालव्यजनादिपरिच्छदान् कुर्वन्त्यः सत्यः तत्परिवारभावं परिचारकत्वं प्रपेदिरे प्राप्तवत्यः । दिक्पालविभूत्यधिदेवताः तत्रावतीर्य छत्रचामरादिस्वस्वचिह्नानि परिच्छदान् कृत्वा रुक्मिणीपारिचर्यमकुर्वन्निति भावः । दिक्पालविभूत्यधिदेवताः

श्रीरुक्मिणीपरिचर्यामकुर्वन्नित्यनेन रुक्मिण्याः सर्वलोकेश्वरीत्वं व्यज्यत इत्याशयः ॥ २१ ॥

वेदालवाले विहितास्थितिं तां
रम्यप्रतानामिव रत्नवल्लीम् ।
स्तनादिलक्ष्यस्तबकादिचिह्नै-
राविष्कृतं यौवनमाविवेश ॥ २२ ॥

वेदेति । वेदाः आलवालं लतानां मूले जलस्थापनार्थं कृतो बन्धविशेष इति तस्मिन् विहितास्थितिं कृतावस्थानां तत्प्रतिपाद्यतया तथात्वारोपः । अत एव रम्यप्रतानां रम्यः प्रतानः शाखापत्रप्रचयो यस्यास्तां रत्नवल्लीं रत्नमयीं लतामिव स्थितां रुक्मिणीं स्तनादिलक्ष्यस्तबकादिचिह्नैः स्तनादिव्याजस्तबकादिलाञ्छनैः उभयत्राप्यादिशब्देन रोमराजिभृङ्गावलीप्रभृतिपरिग्रहः । तैराविष्कृतं यौवनमाविवेश ॥ २२ ॥

तदीयसर्वाङ्गजुषोरगाधं
सौन्दर्यलावण्यसुधास्रवन्त्योः ।
ममज्जुरापत्य दृशः सखीना-
मन्योन्यसंभेदमपूर्वतीर्थम् ॥ २३ ॥

तदीयेति । तदीयसर्वाङ्गजुषोः तस्याः रुक्मिण्याः इमानि तदीयानि तानि सर्वाण्यङ्गानि प्राप्तयोः सौन्दर्यलावण्यसुधास्रवन्त्योः सौन्दर्यं सामुद्रिकोक्तावयवसंस्थानविशेषः लावण्यम् "मुक्ताफलेषु छायायां तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते" इत्युक्तलक्षणप्रभाविशेषः ते एव सुधास्रवन्त्यौ अमृतसरितौ तयोरन्योन्यसंभेदं परस्प-

रसज्ञममेव अगाधमतलस्पर्शि । अपूर्वतीर्थं प्रसिद्धप्रयागादिभिन्नं तीर्थं कर्म सखीनां दृशः आपत्य प्रविश्य ममज्जुः दर्शनेन कदापि तृप्तिमप्राप्नुवत्यः तत्रैव लग्ना इत्यर्थः ॥ २३ ॥

निशेव चन्द्रेण घनव्यपाये
नैसर्गिकी बुद्धिरिव श्रुतेन ।
फलेन सा नीतिरिवाप्रमादा
युक्ता बभौ नूतनयौवनेन ॥ २४ ॥

**निशेति ।** नूतनयौवनेन युक्ता सा रुक्मिणी घनव्यपाये शरत्समये चन्द्रेण युक्ता निशेव श्रुतेन शास्त्रेण युक्ता नैसर्गिकी स्वभावसिद्धा बुद्धिरिव फलेन प्रयोजनेन युक्ता अप्रमादा नीतिरिव अर्थशास्त्रोक्ता राजनीतिरिव च बभौ ॥ २४ ॥

आलक्ष्यसंलापलवैरपाङ्गै-
रङ्गैरनङ्गोदयपूर्वरङ्गैः ।
वियातमुग्धैरपि विभ्रमैः सा
विलक्षयामास विभूषणानि ॥ २५ ॥

**आलक्ष्येति ।** सा रुक्मिणी आलक्ष्यसंलापलवैः ईषद्दृश्यसंलापलेशैः संलापशब्देनाकूतगर्भा विकारा लक्ष्यन्ते । तथाभूतैरपाङ्गैः अपाङ्गदर्शनैः अनङ्गोदयपूर्वरङ्गैः अनङ्गोदयस्य मन्मथनाट्योदयस्य प्रथमरङ्गस्थलभूतैः अङ्गैरवयवैः वियातमुग्धैः धृष्टाधृष्टैः १ धृष्टे धृष्णुर्वियातश्चेत्यमरः । विभ्रमैः शृङ्गारचेष्टाविशेषैः विभूषणानि विलक्षयामास । विलक्षानि विस्मितानि

लज्जितानि वा चकार । विलक्षशब्दात् तत्करोतिण्यन्ताल्लिटि अम्प्रत्ययः । आभरणेभ्योऽपि अपाङ्गदर्शनादिभिरेवाधिकां शोभामपुष्यादित्यर्थः ॥२५॥

अमुक्तकौमारयुवत्वसीम्ना
 कान्त्या बभौ कल्पितरागभूम्ना ।
जरत्पलाशप्रसवानुषक्ता
 प्रतानिनी पल्लवसंपदेव ॥ २६ ॥

अमुक्तेति । अमुक्तकौमारयुवत्वसीम्ना अत्यक्तकौमारयौवनसंधिसमयया कल्पितरागभूम्ना पश्यद्दृशां संपादितानुरागबाहुल्यया कान्त्या देहशोभया जरत्पलाशप्रसवानुषक्ता जीर्णपत्रपुष्पफलानुवृत्तिमती । जीर्यतेरतृन्निति भूतेऽर्थेऽतृन् प्रत्ययः । प्रसवो जननानुज्ञापत्रेषु फलपुष्पयोरिति वैजयन्ती । प्रतानिनी प्रतानो लतानां शाखापत्रप्रचयः तद्वती लता कल्पितरागभूम्ना संपादितारुणिमबाहुल्यया पल्लवसंपदा प्रवालश्रियेव बभौ ॥ २६ ॥

प्रसाधनानां परिकर्म दिव्यं
 विजृंभणं विभ्रमजालकानाम् ।
वयः शुभं वामदृशश्चकाशे
 पश्यद्दृशां भाग्यमनन्यभोग्यम् ॥ २७ ॥

प्रसाधनानामिति । प्रसाधनानामाभरणानां दिव्यं परिकर्म मनोज्ञमाभरणम् । "दिव्यं लवङ्गके दिव्यं वल्गौ दिवि भवेऽन्यवत्" इति विश्वः । विभ्रमजालकानां विलाससन्दोहकानां विजृम्भणं प्रसरणम् ।

तद्धेतुत्वात् तथा रूपकम् । पश्यद्दृशां द्रष्टृजनलोचनानां भाग्यं शुभावहम् । भाग्यं शुभावहविधौ स्याच्छुभाशुभकर्मणीति विश्वः । अनन्यभोग्यम् अनन्यः. भगवान् सर्वं खल्विदं ब्रह्मेति श्रुतिः सर्वात्मतया तस्मात् पृथग्भूतवस्त्वभावात् । तस्य भोग्यं वामदृशः रुचिरलोचनायाः रुक्मिण्याः शुभं मनोहरं वयः यौवनं चकाशे । शुभं मञ्जुप्रशस्तयोरिति वैजयन्ती ॥ २७ ॥

अवाप्य सा मुग्धदशामपूर्वा-
मव्याजलीलागतिराबभासे ।
रम्या रमोत्पत्तिदशाविशेषा-
ज्जाम्बूंनदी जङ्गमपद्मिनीव ॥ २८ ॥

**अवाप्येति** । अव्याजा अकृत्रिमा स्वाभाविकी लीलागतिर्यस्याः सा अपूर्वामन्यत्रादृष्टचरीं मुग्धदशां मनोज्ञदशां यौवनावस्थामवाप्य रम्या रुचिरा जाम्बूनदी स्वर्णमयी क्वचिदपवादविषयेप्युत्सर्गाः प्रवर्तन्त इति नित्यं वृद्धशरादिभ्य इति मयड्विषये विकारेऽण्प्रत्ययः । अथवा जाम्बूनद्यां जाता जाम्बूनदी । तत्र जात इत्यण् प्रत्ययः । जङ्गमपद्मिनी संचारिणी नलिनी । रमोत्पत्तिदशाविशेषात् रमोत्पत्तिदशा लक्ष्मीजननसमय एव विशेषः उत्तमवस्तु । विशेषोऽवयवे भेदे द्रष्टव्योत्तमवस्तुनीति शब्दार्णवः । तमवाप्येति ल्यब्लोपे पञ्चमी ॥ आबभासे चकाशे ॥ २८ ॥

तस्यास्तनुं वर्णयतो ममैवं
लीनोपमा दोषपदं न विन्देत् ।

निदर्शनं तैरपि नित्यदृष्टं
येषां निकर्षोऽपि गुणो यतः स्यात् ॥ २९ ॥

**तस्या इति** । तस्याः रुक्मिण्याः तनुमेव जङ्गमपद्मिनीवेत्याद्युक्त-वक्ष्यमाणप्रकारैः वर्णयतो मम हीनोपमा उपमानस्य उपमेयात्प्रमाणेन जात्या गुणैर्वा हीनत्वं हीनोपमा उपमादोषः । यथा—चकास्ति गगनाभोगे खद्योत इव भानुमानित्यादि । सा दोषपदं दोषस्थानं न व्रिन्देत् न प्राप्नुयात् । दोषो न भवेदित्यर्थः ॥ कुत इत्यत्र आह । निदर्शनमिति । येषामाकाशादीनां यतः परमात्मादेः निकर्षोऽपि गुण उत्कर्षः स्यात् । तैरतिनिकृष्टैरप्याकाशादिभिः सह तस्य परमात्मादेः निदर्शनं साम्य-कथनं दृष्टम्, यथाकाशवत् सर्वगतश्च नित्य इत्यादिश्रुतिषु । न हि प्रत्यण्डं प्रतिसर्गं च भिन्नस्याकाशस्य प्रतिरोमकूपविश्रान्तानेककोटिब्र-ह्माण्डेनापरिमितानेकसर्गप्रवर्तकेन परमात्मना साम्यगन्धोऽप्यस्ति । अ-थापि श्रुतौ यथा तैः तस्य साम्यकथनम् एवं पद्मिन्यादिभिः देवी-तनोः साम्यकथनं ममापीत्यर्थः । सदृशवस्त्वन्तरालाभे हीनोपमापि न दोषाय । तादृक्षवस्त्वन्तरसंभवकथनमेव तस्या दोषत्वकथनमिति भावः ॥ २९ ॥

अथ रुक्मिण्याः चिकुरमारभ्य नखरपर्यन्तप्रत्यङ्गवर्णनमुपक्रमते—

तारेण तस्याश्चिकुरान्धकारे
तारायितं मौक्तिकजालकेन ।
प्रायेण योऽसौ प्रलयावसाने
निशीथसृष्टेरभवन्निदानम् ॥ ३० ॥

तारेणेति । तस्याश्चिकुर एवान्धकारे तारेण शुद्धेन मौक्तिकजालकेन आपीडमुक्ताफलसमूहेन तारायितं तारावन्नक्षत्रवदाचरितम् । ताराशब्दात् कर्तुः क्यङ् सलोपश्चेति आचारार्थक्यङन्तात् भावे क्तः । यथा महान्धकारं प्राप्य नक्षत्राणि प्रकाशन्ते तथा तस्याः केशपाशं प्राप्य मौक्तिकानि प्राकाशन्तेत्यर्थः । तारोत्युच्चैस्त्रयलिङ्गु । तारोत्युक्तन्तरे मुक्ताविशुद्धौ शुद्धमौक्तिके । कनीनिकाक्षयास्त्रिषो द्वयोस्तारं तु रूप्यकमिति रत्नमाला । योऽसौ यच्छब्दसन्निहितः असौशब्दः प्रसिद्धपरामर्शी । यः प्रसिद्धः चिकुरान्धकारः प्रलयावसाने प्रलयस्यान्ते जगत्सृष्टिसमये निशीथसृष्टेरर्धरात्रस्य सृष्टेः प्रायेण नूनं निदानम् उपादानकारणमभूत् । महान्धकारमयान्निशीथादप्यतिशयितेन कार्ष्ण्येन तस्यापि कारणतयोत्प्रेक्षा । एतदुत्प्रेक्षानुगुण्येन तारायितमित्युपमासमभिव्याहारान्न सादृश्यम् । चिकुरान्धकार इत्यत्र रूपकसमासो दर्शितः । अन्धकारस्यैव हि निशीथकारणत्वमुचितं न तु तत्सदृशस्य ॥ ३० ॥

द्युतिं शिखारत्नसहस्ररश्मे-
ज्योत्स्नां च मुक्ताफलजालजाताम् ।
तत्कुन्तलश्रेणिमयी तमिस्र-
मैत्रीं दधौ मन्मथचापमौर्वी ॥ ३१ ॥

द्युतिमिति । तत्कुन्तलश्रेणिमयी तस्याः केशपालिरूपा मन्मथचापस्य मौर्वी भ्रमरराजिः मोहनत्वात् तथाध्यवसायः । शिखारत्नसहस्ररश्मेः चूडामणेरेव सूर्यस्य द्युतिं दीप्तिं, मुक्ताफलजालजातां शिरोभूषणस्थमौक्तिकनिवहोत्पन्नां ज्योत्स्नां मौक्तिकप्रभैव तथाध्यवसीयते । तमिस्रमैत्रीमन्धकारेण सौहृदं च दधौ । सादृश्यमिह सौहृदत्वेनाध्यवसितम् ।

यत्र सौरालोको न तत्र चन्द्रिका प्रसरति। यत्र सौरालोकः चन्द्रिका च तस्य देशस्यान्धकारविरोधित्वात् न तस्य तेन मैत्री संभवति। इह तु तत्रयमपि मिलितमित्याश्चर्यमिति भावः॥ ३१॥

मुखाब्जसौन्दर्यमधुद्विरेफाः
कान्त्यापगाशैवलपुञ्जकल्पाः।
शोणेन चूडामणिना ससंध्यां
तमीमपुष्यन्नलकास्तदीयाः॥ ३२॥

मुखाब्जेति। मुखमेवाब्जं तस्य सौन्दर्यमेव मधु तस्य द्विरेफाः भ्रमरा इति रूपकम्। कान्त्यापगाशैवलपुञ्जकल्पाः कान्तिरेवापगा नदी तस्याः शैवलनिवहा इव स्थिताः इत्युत्प्रेक्षा। उपमायां प्रयुज्यमानस्यापि कल्पप्प्रत्ययस्य औचित्यादिहोत्प्रेक्षायां पर्यवसानम्। तदीयाः तस्या रुक्मिण्याः इमे अलकाः केशाः शोणेन चूडामणिना शिरोभूषणरत्नेन ससंध्यां संध्यासहितां तमीं रात्रिमपुष्यन् पुष्यन्ति स्म उपचिन्वन्ति स्म। सादृश्येन तज्जातीया अभवन्नित्यर्थः। पदार्थानां सजातीयसमृद्ध्याभ्युपचयो भवति। तमी तमिस्रा कथिता तमस्विनीति रात्रिपर्यायेषु हलायुधः॥

शरत्प्रसन्नेन्दुकलाभिरामा
ललाटरेखा सुदृशो रराज।
कामेन तत्कान्तिलतासमृद्ध्यै
स्वयं प्रक्लृप्तेव सुधास्रवन्ती॥ ३३॥

शरदिति। शरदि प्रसन्ना निर्मला चन्द्रकलेवाभिरामा सुदृशः

सुन्दरलोचनायाः रुक्मिण्याः ललाटरेखा तस्याः रुक्मिण्याः कान्तिरेव लता तत्समृद्ध्यै कामेन स्वयं प्रक्लृप्ता स्वयमेव रचिता। सुधास्रवन्ती अमृतकुल्येव रराजेत्युत्प्रेक्षा ॥ ३३ ॥

कस्तूरिकाक्लृप्तविशेषकं त-
त्पश्यन्मृगाङ्को वदनं मृगाक्ष्याः।
विभाव्य तादृक्परभागशोभां
कलङ्कयुक्तोऽपि जहौ विषादम् ॥ ३४ ॥

कस्तूरिकेति । कस्तूरिकाक्लृप्तविशेषकं मृगनाभिकृततिलकम् । तमालपत्रतिलकचित्रकाणि विशेषकमित्यमरः । मृगाक्ष्याः मृगस्य अक्षिणी इव अक्षिणी यस्या इति उपमानपूर्वपदः सोत्तरपदलोपो बहुव्रीहिः । तस्याः तद्वदनं पश्यन् मृगाङ्कश्चन्द्रः तादृशः तत्समानस्यानन्योपमेयस्य परभागस्य तिलकवर्णसंनिधानप्रयुक्तमुखवर्णस्फुटीभावस्य शोभां कान्तिम् । परभागो गुणोत्कर्ष इति वैजयन्ती । विभाव्य ओलाच्य कलङ्कयुक्तोऽपि विषादं जहौ दुःखं त्यक्तवान् । स्वस्य कलङ्कोऽप्येवं परभागशोभावहो भवेदिति बुद्ध्येति भावः। चन्द्रस्य विषादत्यागसंबन्धाभावेऽपि तत्संबन्धकथनमतिशयोक्त्यलंकारभेदः ॥ ३४ ॥

तारुण्यनद्यास्तनुवीचिकल्पे
तन्वङ्गते शार्ङ्गनिदानदृश्ये।
अनङ्गवेदप्रणवस्य रत्या
लेखाक्षरं न्यस्तमसूचयेताम् ॥ ३५ ॥

तारुण्येति । तारुण्यनद्याः तारुण्यं नदीव तस्यास्तनुवीचिकल्पे

सूक्ष्मवीचितुल्ये शार्ङ्गस्य भगवच्चापस्य छिदानमुपादानं सूक्ष्मावस्थेव दृश्ये मनोज्ञे सूक्ष्मावस्था उपादानमिति तान्त्रिकाः। तच्चूलते तस्याः रुक्मिण्याः लतातुल्ये भ्रुवौ अनङ्गवेदस्य मन्मथागमस्य यः प्रणवः आदावुच्चार्य ओङ्कारः तस्य रत्या मन्मथपत्न्या न्यस्तं लिखितं लेखाक्षरं लिप्यक्षरमसूचयेतामन्वकुर्वाताम् । नागरलिपौ ओङ्कारस्यार्धचन्द्राकार-दलद्वयमस्ति। तद्दलद्वयमिव तुच्चूलताद्वयं रराजेत्युत्प्रेक्षा। तथा नैषधे-ऽपि सरस्वतीवर्णने दृश्यते। भ्रुवौ दलाभ्यां प्रणवस्य यस्यास्तद्विन्दुना फालतमालपत्रम्। तदर्धचन्द्रेण विधिर्विपञ्चीनिकाणनाकोणधनुः प्रणिन्ये इति। रत्या लिखितमिति मोहनत्वादुक्तम्। यथा कामेन तत्कान्ति-लतासमृद्ध्या इति श्लोके कामनिर्मितत्वम् ॥ ३५ ॥

प्रसूतपद्मोत्पलकाननश्रीः
प्रारब्धवीचीविभवा विलासैः ।
दृष्टिस्तदीया ददृशे दयार्द्रा
द्राघीयसी मन्मथदीर्घिकेव ॥ ३६ ॥

**प्रसूतेति**। प्रसूता उत्पादिता पद्मानामुत्पलानां कुमुदानामिन्दी-वराणां च काननस्य श्रीः शोभा यया सा तथोक्ता रक्तरेखाणां कनी-निकाबहिर्भागयोः कनीनिकायाश्च प्रभामरुणधवलमेचकरूपां सृजन्ती-त्यर्थः। दीर्घिकापक्षे प्रसूता पद्मोत्पलकाननस्य श्रीः संपत्तिः ययेति योज्यम्। श्रीर्वेषरचनाशोभासंपत्सरलशाखिष्विति रत्नमाला। विलासैः शृङ्गारचेष्टाभिः प्रारब्धवीचीविभवा उपक्रान्ततरङ्गसमृद्धिः दयार्द्रा द्राघी-यसी अतिशयेन दीर्घा। दीर्घशब्दादीयसुन्प्रत्ययः प्रियस्थिरादि-सूत्रेण तस्य द्राघादेशश्च। तदीया रुक्मिण्याः इयं दृष्टिः मन्मथस्य दीर्घिका

विहारवापिकेव ददृशे इत्युत्प्रेक्षा ॥ ३६ ॥

तदृष्टिरायामवती सुजाता
श्यामोज्ज्वला चारुविशालमध्या ।
मन्ये समेष्यन्मधुवैरिलक्ष्या
चेतोभुवः शक्तिरभूदमोघा ॥ ३७ ॥

**तद्दृष्टिरिति** । आयामवती दैर्घ्यवती श्यामा नीलवर्णा उज्ज्वला रुचिरा विकासिनी शृङ्गारवती वा दृष्टिपक्षे । अर्श आदिभ्योऽजिति मत्वर्थीयोच्प्रत्ययः । शक्तिपक्षे दीप्तिमती । उज्ज्वलो दीप्तिशृङ्गाररुचिरेषु विकासिनीति विश्वः । चारु विशालं विपुलं मध्यं यस्याः सा तथोक्ता सुजाता मनोज्ञा तद्दृष्टिः तस्या रुक्मिण्या दृष्टिः समेष्यत् समागमिष्यत् मधुवैरी कृष्ण एव लक्ष्यं शरव्यं यस्यास्तथाभूता सती अमोघा चेतोभुवः मन्मथस्य शक्तिः कासूः आयुधविशेषः अभूदिति मन्ये। आयामवत्त्वादिगुणैः तथोत्प्रेक्षा । 'कासूसामर्थ्ययोः शक्तिः' इत्यमरः ॥ ३७ ॥

निगृह्णती रत्नतिलप्रसूनं
नासा तदीया नयनाब्धिसेतुः ।
अबोधि निश्वाससमीरगन्धै-
रन्तर्गतान्वेदगणान्वमन्ती ॥ ३८ ॥

**निगृह्णतीति** । रत्नतिलप्रसूनं रत्नमयं तिलपुष्पं निगृह्णती न्यक्कुर्वती नयनाब्धिसेतुः नयनमेवाब्धिः तस्य सेतुः नयनद्वयमध्ये संचारमार्गवत् दृश्यमानत्वात् नयनस्य समुद्रसाम्यं कविसमयसिद्धम् । तथा कादम्बरी-

वर्णने दृश्यते । निजमुखलक्ष्मीनिवासदुग्धोदधिना लोचनयुगलेनेति । तदीया तस्याः रुक्मिण्या इयम् । नासा निश्वाससमीरगन्धैः श्वासमारुतसौरभैः अन्तर्गतान् वेदगणान् वमन्ती उन्मुखती अबोधि विद्वद्भिः ज्ञाता। कर्मणि लुङ् । प्रथमा परमा लक्ष्मीः जगत्त्रयैककुटुम्बिनी । तद्धर्मधर्मिणीशक्तिः ब्रह्मणोऽनपगामिनी इति श्रियोऽपि भगवद्धर्मधर्मवत्त्वश्रवणात् तन्निश्वासा अपि भगवन्निश्वासा इवेति विदामासुरिति भावः ॥ ३८ ॥

नवेन्दुसंध्याप्रभृतीनि लोके
निर्वर्ण्यमानानि निदर्शनानि ।
न खल्वविन्दन्कलयापि तस्याः
स्मिताधरव्याप्तिकृतामभिख्याम् ॥ ३९ ॥

नवेति । नवेन्दुसहिता संध्या नवेन्दुसंध्येति मध्यमपदलोपी समासः । प्रभृतिशब्देन पुष्पपल्लवमुक्ताप्रवालमित्यादीनि गृह्यन्ते । तानि लोके निर्वर्ण्यमानानि दृश्यमानानि । निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणमित्यमरः । निदर्शनानि स्मिताधरदृष्टान्ताः । तस्याः रुक्मिण्याः स्मिताधरव्याप्तिकृतां स्मिताधरसंपत्प्रयुक्तामभिख्यां शोभां कलया मात्रयापि न खल्वविन्दन् नालभन्त खलु । खलुशब्दो वाक्यालंकारे ॥ ३९ ॥

अहेतुरज्यन्नधरस्तदीयः
प्रसूनमुक्तायितमुग्धहासः ।
लक्ष्मीलताया ललितोदयेश्च
प्रवालयोगं प्रथयांबभूव ॥ ४० ॥

अहेत्विति । अहेतु अलक्तकादिहेतुनिरपेक्षं रज्यन् स्वभावारुणः

प्रसूनमुक्तायितः पुष्पमौक्तिकवदाचरितवान् मुग्धः सुन्दरो हासो यस्मिंस्तथोक्तः। प्रसूनमुक्ताशब्दादाचारार्थक्यङि सति अकर्मकत्वात् कर्तरि क्तः। मुग्धः सुन्दरमूढयोरिति विश्वः। तदीयः रुक्मिण्या अयमधरो दन्तच्छदः। लक्ष्मीलतायाः कान्तिवल्ल्याः ललितोदधेः विभ्रमसागरस्य च प्रवालयोगं पल्लवयोगं विद्रुमयोगं च प्रथयांबभूव प्रख्यापयामास। तस्याः स्मिताधरौ कान्तिलतायाः पुष्पपल्लववत् ललितोदधेः मुक्ताविद्रुमवच्च रेजतुरित्यर्थः ॥ ४० ॥

मुखं तदीयं विरराज मुग्धं
सौरभ्यलावण्यसमुच्चयेन ।
व्यवस्थितान्योन्यविशेषलोभा-
देकत्वमापन्नमिवेन्दुपद्मम् ॥ ४१ ॥

**मुखमिति**। मुग्धं मनोज्ञं तदीयं मुखं सौरभ्यलावण्ययोः समुच्चयेन संमेलनेन हेतुना व्यवस्थितौ एकैकत्र स्थितावन्योन्यस्य यौ विशेषौ भेदकधर्मौ तयोर्लोभादिन्दोः सौरभ्ये पद्मस्य लावण्ये चाभिलाषादेकत्वमापन्नं प्राप्तमिन्दुपद्मं इन्दुश्च पद्मं चेति द्वन्द्वैकवद्भावः। तदिव विरराज। विशेषोऽवयवे व्यक्ते तिलकेऽत्यन्तभेदके इति रत्नमाला ॥

वर्णानुपूर्वीसुभगेन काले
भव्यां श्रुतिं भावयता यथावत् ।
तारस्य संस्थानमिवान्वकार्षी-
त्कण्ठेन सा काञ्चनकम्बुभासा ॥ ४२ ॥

**वर्णेति**। सा लक्ष्मीः वर्णानां गीतिक्रमाणां कर्पूरकस्तूर्यादिवर्ण-

पनानां वा आनुपूर्व्या परिपाट्या सुभगेन मनोज्ञेन काले गानसमये श्रुतिं जातावेकवचनम् । श्रोतॄणां श्रोत्राणि यथावत् सम्यग्भव्यां भावयता शुभामानन्दिनीं कुर्वता । भव्यशब्दादानन्दपराद्ङ्गी आद्यच्प्रत्ययः । काञ्चनकम्बुभासा सुवर्णशङ्खत्विषा कण्ठेन तारस्य संस्थानमाकारमन्वकार्षीत् अनुकरोति स्म । इवशब्दो वाक्यालंकारे । आख्यातेनैव सादृश्यकथनात् ग्रन्थलिप्यां प्रणवसंस्थानं वर्तुलमिति तत्सादृश्योक्तिः प्रणवोऽपि वर्णानामकारोकारमकाराणां आनुपूर्व्या सुभगः सर्गाद्यसमये श्रुतेः वेदस्य यथावत् स्वरवर्णादिपौष्कल्येन भावयितृतोत्पादकश्च । ओंकारप्रभवा वेदाः इति स्मृतेः । वर्णो नीलादिविप्राद्योः कीर्त्तौ गीतिक्रमे स्तुतौ । कुथे वृत्तेऽक्षरे त्वत्री प्रकारे लेपशोभयोरिति । ओङ्कारः प्रणवस्तारः इति च वैजयन्ती ॥ ४२ ॥

मधुद्विषः कर्णपरिष्क्रियार्थं
कामात्मना माल्यकृतेव क्लृप्ते ।
बभूवतुर्बाहुलते तदीये
शम्पात्विषौ चम्पकमालिके द्वे ॥ ४३ ॥

**मधुद्विष इति ।** शम्पात्विषौ विद्युत्प्रभे तदीये तस्या इमे बाहुलते मधुद्विषः कृष्णस्य कर्णपरिष्क्रियार्थं कर्णप्रसाधनाय कामात्मना कामरूपेण माल्यकृता मालाकारेण क्लृप्ते ग्रथिते द्वे चम्पकमालिके इव बभूवतुः ॥

आसीदधिष्ठानविशेषसीमा
वक्षोजयोरङ्कुरतोरमुष्याः ।

मुकुन्दवक्षःस्थलमुद्रणार्हां

भव्यामवस्थामिव भावयन्ती ॥ ४४ ॥

आसीदिति । अमुष्याः रुक्मिण्याः अङ्कुरतोः प्ररोहतोः वक्षोजयोरधिष्ठानविशेषसीमा मूलसंनिवेशरूपस्यावयवस्य सीमा । विशेषोऽवयवे द्रव्य इति शब्दार्णवः । मुकुन्दवक्षःस्थलमुद्रणार्हां अतिविशालस्य कृष्णवक्षःस्थलस्य मुद्रणे उचितां भव्यां भाविनीमवस्थां भावयन्तीव सूचयन्तीवासीत् । प्रादुर्भवता यावता स्तनपरिमाणेन मुकुन्दवक्षः कात्स्न्र्येन मुद्रितं भवति तावदुपयोग्यधिष्ठानं प्रथममेवासीदित्यर्थः ॥

समावृतौ हारमयूखसूत्रै-

स्तस्याः स्तनौ चारुतरावभूताम् ।

जिगीषतस्तत्प्रियचित्तवृत्तिं

मनोभुवो मङ्गलपूर्णकुम्भौ ॥ ४५ ॥

समावृताविति । हारमयूखा एव सूत्राणि तन्तवः तैः समावृतौ चारुतरौ तस्याः स्तनौ तत्प्रियचित्तवृत्तिं तस्याः प्रियस्य कृष्णस्य मनोव्यापारं जिगीषतो जेतुमिच्छतः मनोभुवः मन्मथस्य मङ्गलपूर्णकुम्भौ मङ्गलार्थं पूर्णकलशावभूताम् । राज्ञां प्रस्थानसमयेषु तन्तुभिः वेष्टितं पूर्णकुम्भयुगलं पुरतः प्रदर्शयन्ति तद्वदभूतामित्यर्थः ॥ ४५ ॥

तस्मास्तदा तद्दलक्ष्यमध्यं

तन्व्याः स्तनद्वंद्वमवाप वृद्धिम् ।

काले यथा तत्प्रथिमप्रभूतं
कृच्छ्रादभूत्कृष्णभुजान्तरालम् ॥ ४६ ॥

**तस्या इति** । तस्याः तन्व्याः रुक्मिण्याः तद्वद्रुक्मिणीवदेवालक्ष्य-मध्यम् अविभाव्यमध्यदेशं स्तनद्वयं तथा तेन प्रकारेण वृद्धिमाप । कृष्णस्य भुजान्तरालं वक्षः काले आश्लेषादिसमये यथा कृच्छ्रात् कथंचित् तत्प्रथिमप्रभूतं तस्य स्तनद्वयस्य प्रथिम्नः पृथुत्वस्य पर्याप्तं बभूव । तथेति पूर्वेण संबन्धः ॥ ४६ ॥

मध्यं कृशिम्ना विरराज तस्या
नाभिह्रदान्नालमिव प्ररूढम् ।
प्रियागमोदर्कमभूद्यदग्रे
कुचात्मना काञ्चनपद्मयुग्मम् ॥ ४७ ॥

**मध्यमिति** । तस्याः रुक्मिण्याः मध्यमवलग्नं कृशिम्ना कार्श्येन नाभिरेव ह्रदः अगाधजलाशयः जलाशयो जलाधारस्तत्रागाधजले ह्रदः इत्यमरः । तस्मात्प्ररूढं नालमिव कमलमूलदण्डमिव रराज । यदग्रे यस्य मध्यस्याग्रे कुचात्मना कुचरूपेण प्रियागमोदर्कम् प्रियस्य कृष्णस्यागमः आगमनं उदर्कः भाविफलं यस्य । उदर्कः फलमुत्तरमित्यमरः । तथाभूतं कांचनपद्मयुग्ममभूत् तदिति पूर्वेण संबन्धः । प्रियस्य हर्षस्य आगमयिता उदितोऽर्को यस्येति व्युत्पत्त्या पद्मं प्रियागमोदर्कं भवतीति भावः । अत्रार्थे आगमेति आङ्पूर्वाद्गमेर्ण्यन्तात् पचाद्यचि रूप उदर्कमिति प्राचार्यवत्समासः ॥ ४७ ॥

स्तोकानताङ्गी स्तनभारभूम्ना
मुग्धा बभौ मुष्टिमितावलग्ना ।

भृङ्गाभिनन्द्येन गुणेन युक्ता
कामस्य सा कापि धनुर्लतेव ॥ ४८ ॥

स्तोकेति । स्तनभारस्य भूम्ना बाहुल्येन स्तोकानताङ्गी किंचिदवनतशरीरा मुष्टिमितावलग्ना मुष्टिपरिमितमध्यभागा भृङ्गाभिनन्द्येन भ्रमराणां श्लाघनीयेन गुणेन सौरभ्येण युक्ता सा मुग्धा बाला कामस्य कापि प्रियमाणातिरिक्ता काचिद्धनुर्लतेव चापयष्टिरिव बभौ मन्मथचापयष्टिरिव अनाकृष्टमौर्वीका स्तोकानता मुष्टिग्राह्यमध्या भृङ्गैः हेतुभिः अभिनन्द्येन गुणेन भृङ्गराजिरूपया मौर्व्या युक्ता च भवतीति भावः ॥

रराज लावण्यतरङ्गरम्या
वलित्रयी मध्यगता मृगाक्ष्याः ।
अन्तःस्थितानामिव दर्शयन्ती
निवेशसीमान्तमनुश्रवाणाम् ॥ ४९ ॥

रराजेति । लावण्यतरङ्गरम्या लावण्यसिन्धोः तरङ्गपालिरिव रम्या मृगाक्ष्या मध्यगतावलग्नगता वलित्रयी उदररेखात्रयी अन्तःस्थितानां तस्या अभ्यन्तरे स्थितानामनुश्रवाणाम् चतुर्णामपि वेदानां निवेशसीमान्तं निवाससीमावसानं दर्शयन्ती रराज । वलित्रयेण निवेशचतुष्टयमसंकीर्णं दर्शितं भवतीति भावः ॥ ४९ ॥

मध्येवलग्नं सुदृशो विलग्ना
रोमावली कामधनुर्गुणाभा ।
जिगाय नाभीसरसः प्रजाता
मुल्लासिनीमुत्पलरेणुपङ्क्तिम् ॥ ५० ॥

मध्य इति । सुदृशो रुक्मिण्याः मध्येवलग्नं वलग्नस्य मध्ये । विलग्ना सक्ता । पारे मध्ये षष्ठ्या वेत्यव्ययीभावः मध्यशब्दस्य एदन्तत्वनिपातश्च । कामधनुर्गुणाभा कामस्य धनुर्गुणो भृङ्गपङ्क्तिः तत्सदृशी रोमावली नाभीसरसः उल्लासिनीं प्रसरणशीलां सुजातां मनोज्ञां उत्पलरेणुपङ्क्तिमिन्दीवरपरागरेखां जिगाय जयति स्म । इन्दीवरपरागरेखेव रराजेत्युत्प्रेक्षायामौचित्यात् पर्यवसानं द्रष्टव्यम् ॥ ५० ॥

अनुप्रयातः स्ववशामभिख्यां
यूथोज्झितो यौवनगन्धहस्ती ।
तद्रोमराजिव्यपदेशदृश्यां
नूनं दधौ नूतनदानरेखाम् ॥ ५१ ॥

अनुप्रयात इति । स्वस्मिन् वशाधीना स्ववशा सैव स्वस्य वशा करिणी । श्लिष्टरूपकम् । 'त्रिष्वधीने वशो वाञ्छा प्रभुत्वाधीनतासु च । वशा वन्ध्या गवी योषा दुरिता करिणी च सा ' इति रत्नमाला । एवंभूतामभिख्यां शोभामनुप्रयातः अनुसृतवान् । गत्यर्थत्वात् कर्तरि क्तः । यूथोज्झितः उज्झितयूथः । आहिताग्न्यादित्वान्निष्ठायाः परनिपातः । यथा यूथं त्यक्त्वा संचरन्नद्वितीयो भवति एवं सदृशराहित्याद‌द्वितीय इति यौवनपक्षे तात्पर्यम् । यौवनगन्धहस्ती यौवनमेव मत्तगजः । गन्धः गर्वः तत्सहितः हस्ती । मध्यमपदलोपी समासः । 'गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोः' इति विश्वः । चन्दनहरितालादिगन्धयुक्तः क्षत्रियजातीयो गज इति वा । उक्तं हि गजशास्त्रे—' मदश्रीहरितालगुग्गुलशिलागन्धोऽतिशूरो रणे नाराचाशनिपातवेगसहनः स्तम्बेरमः क्षत्रियः' इति । तद्रोमराजिव्यपदेशदृश्यां रुक्मिण्या रोमराजिव्याजेन दृग्गोचर-

भूतां नूतनदानरेखामभिनवमदजलराजिं नूनं दधौ । सापह्नवोत्प्रेक्षेयमिति व्यपदेशशब्दे सत्यपि नूनंशब्दस्य नाधिक्यम् ॥ ५१ ॥

प्रकाशितावर्तरुचिः प्रभाब्धौ
नाभिः सुवृत्ता रुरुचे नताङ्ग्याः ।
रोमावलीरत्नलतानुरूपं
रुक्मेण निष्पन्नमिवालवालम् ॥ ५२ ॥

प्रकाशितेति । नताङ्ग्याः स्तनभारात् किंचिदवनताङ्ग्याः रुक्मिण्याः प्रभाब्धौ प्रभासमुद्रे प्रकाशितावर्तरुचिः दर्शितजलभ्रमशोभा सुवृत्ता सम्यग्वर्तुला नाभिरोमवल्ल्येव रत्नलता तस्याः अनुरूपः सदृशः रुक्मेण सुवर्णेन निष्पन्नमालवालमिव जलधारणार्थमूलबन्धवलयमिव रुरुचे ॥५२॥

पृथ्वी चकाशे स्तनसंपदस्या
लावण्यमम्भो नियतं च तेजः ।
श्वासोदयो गन्धवहः शुभाङ्ग्याः
नाभिश्च मध्यं च नभो विभक्तम् ॥ ५३ ॥

पृथ्वीति । शुभाङ्ग्याः रमणीयाङ्ग्याः रुक्मिण्याः पृथ्वी महती । वोतो गुणवचनादिति पृथुशब्दात् ङीष् । पृथ्वी भूरूपा चेति श्लिष्टरूपकम् । स्तनसंपत् स्तनशोभा च लावण्यम् 'मुक्ताफलेषु च्छायायाः तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥' इत्युक्तलक्षणं च चाकचक्यं तदेवाम्भ इति व्यस्तरूपकम् । तच्च नियतं स्थिरं तेजः बहिः प्रसमरं ज्योतिः तदेव तेजः तृतीयमहाभूतमिति श्लिष्टरूपकम् । श्वासोदयः श्वासस्योद्गमः गन्धवहो गन्धस्य वोढा स एव वायुतत्त्वमिति श्लिष्टरूपकम् ।

नाभिश्च मध्यं च नभः तदुभयमाकाशमिति व्यस्तरूपकम्। तच्च विभक्तम् उक्तक्रमेण पृथिव्यादिमहाभूतरूपेषु कृतविभागंसवकाशे । नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामिति नपुंसकशेषस्यैकवद्भावस्य च विधानात् स्तनसंपदि च विभक्तमिति नपुंसकैकवचनेन परामर्शः ॥ ५३ ॥

गजेन्द्रहस्तादिषु तत्समत्वे
दूरे सतां दोषगुणावमर्शः ।
भविष्यतः शार्ङ्गभृतस्तदूरू
लीलोपधाने किमतोऽधिकेन ॥ ५४ ॥

**गजेन्द्रेति** । गजेन्द्रहस्तादिषु गजप्रवरशुण्डादिषु । आदिशब्देन कदलीकरभादिन्यूनरूपोपमानानि गृह्यन्ते । तेषु तत्समत्वे तयोः रुक्मिण्या ऊर्वोः साम्ये विषये सतामभिज्ञानां दोषगुणयोरवमर्शः विचारः दूरे । तद्विचारस्य प्रसक्तिः नास्तीत्यर्थः । कुत इत्यत आह— भविष्यत इति । तदूरू शार्ङ्गभृतः कृष्णस्य लीलोपधाने लीलार्थोपबर्हे भविष्यतः अतोऽधिकेन किम् अतोऽधिक उत्कर्षो न वक्तव्यः । एतावतैव करिकरादीनां तत्साम्यशङ्कानिरासंसिद्धेरिति भावः । वर्ण्यमानयौवनकालविवक्षया भविष्यत इति प्रयोगः ॥ ५४ ॥

मनोज्ञवृत्तं मधुबुद्बुदाभं
चक्षुष्मतां सादरदर्शनीयम् ।
स्वदेहकान्तेः सविशेषदृष्टौ
जानुद्वयं दर्पणतामयासीत् ॥ ५५ ॥

**मनोज्ञेति** । आदौ तस्यां इत्यध्याहार्यः । तस्याः रुक्मिण्याः स्वदेह-

कान्तेः निजदेहशोभायाः सविशेषदृष्टौ सम्यक् दर्शने विषये मनोज्ञवृत्तं मनोज्ञं यथा तथा वर्तुलं मधुबुद्बुदाभं पीतवर्णत्वात् क्षौद्रबुद्बुदसदृशं चक्षुष्मतां सादरं दर्शनीयं चक्षुःसाफल्यापादकमिति सार्द्रं दृश्यं जानुद्वयं दर्पणतामयासीत् याति स्म ॥ ५५ ॥

उदेष्यतः पञ्चशरस्य तस्या-
मुत्पादयिष्यन्नुचितं निषङ्गम् ।
विधिः स्वयं मातृकया किलार्थी
जङ्घायुगं वीक्ष्य जहर्ष तस्याः ॥ ५६ ॥

उदेष्यत इति । तस्यामुदेष्यतः प्रादुर्भविष्यतः पञ्चशरस्योचितं निषङ्गं तूणीरं स्वयमुत्पादयिष्यन् विधिः ब्रह्मा मातृकया अर्थी प्रयोजनवान् भूमिकामिच्छन्निति यावत् । तस्याः जङ्घायुगं वीक्ष्य जहर्ष हृष्यति स्म । इयमेव मातृकेति बुद्धेति भावः । किलेति परकृतौ ॥ ५६ ॥

अलक्तकादप्यधिकात्मरागा
पदद्वयी पद्मदृशश्चकाशे ।
प्राचीनजन्मप्रणयानुरोधा-
त्संभाव्यमानेव सरोजलक्ष्म्या ॥ ५७ ॥

अलक्तकादिति । अलक्तकाद्यावकादपि अधिकात्मरागा अधिकनिजारुण्या पद्मदृशः पदद्वयी प्राचीनं प्राक्तनं जन्म 'पुनश्च पद्मात्संभूता आदित्योऽभूद्यदा हरिः' इति पुराणोक्तं लक्ष्म्याः पद्मे जन्म, तस्मिन् यः प्रणयः स्नेहः तदनुरोधात् तस्यानुवर्तनात् सरोजलक्ष्म्या पद्मकान्त्या संभाव्यमानेव प्रलभ्यमानेव चकाशे ॥ ५७ ॥

पादाम्बुजे दत्तमधुप्रसक्त्या
निर्णेजयामास नखेन्दुकान्त्या ।
प्रायेण सा सत्पथमाश्रयन्ती
पङ्कानसत्सङ्गभवान्पृथिव्याः ॥ ५८ ॥

**पादाम्बुज इति ।** सत्पथं सच्चरितमाश्रयन्ती सा रुक्मिणी पाद एवाम्बुजं तस्मिन् दत्तमधुप्रसक्त्या संपादितमकरन्दसंपर्कया, पदाम्बुजे स्वयं मकरन्दायमानयेति यावत् । नखा इन्दव इव तेषां कान्त्या प्रायेण प्राचुर्येण पृथिव्याः असत्सङ्गभवान् दुष्टदैत्यादिसङ्गजनितान् पङ्कान् पापानि । कर्दमानित्यपि प्रतीयते । 'पङ्कोऽस्त्री कर्दमैनसोः' इति वैजयन्ती । निर्णेजयामास क्षालयामास ॥ ५८ ॥

तस्याः पदाम्भोजमृणालभासा
प्रकाशभूम्ना नखमौक्तिकानाम् ।
प्रकीर्णपुष्पः सुधयावसिक्ता
विहारभूम्यो युगपद्बभूवुः ॥ ५९ ॥

**तस्या इति ।** पदाम्भोजयोः मृणालानां बिसतन्तूनां भा इव भाः यस्य तेन नखमौक्तिकानां प्रकाशभूम्ना लोकबाहुल्येन विहारभूम्यः क्रीडाभूमयः । 'कृदिकारादक्तिनः' इति भूमिशब्दाद्वैकल्पिको ङीष् । युगपदेककालमेव प्रकीर्णपुष्पाः सुधयावसिक्ताश्च बभूवुः । विहारभूमिषु नखालोकविजृम्भणं पुष्पप्रसारणवत्सुधासेचनवच्च जातमित्यर्थः ॥ ५९ ॥

कलाचिकां काञ्चनसारक्लृप्तां
कान्तेः शुभां कामपि काहलीं च ।

शशङ्किरेऽनन्यसमीक्ष्यशोभां
जगन्ति जङ्घामवलोक्य तस्याः ॥ ६० ॥

कलाचिकामिति । जगन्ति लोकाः अनन्यसमीक्ष्यशोभाम् अत-दीयदृश्यकान्ति तस्याः जङ्घामवलोक्य वीक्ष्य कान्तेः शोभायाः काञ्चनसारक्लृप्तां कनकजालोत्कृष्टांशनिर्मितां कलाचिकां पतद्ग्रहं शुभां मनोज्ञां कामपि अनिर्वचनीयरूपां काहलीं वाद्यविशेषं च शशङ्किरे ॥ ६० ॥

तस्याः श्रुतिश्रेणिशिखामणीनां
सकेसरा दीधितिभिर्नखानाम् ।
प्रसाधिकालोचनभृङ्गलौल्यं
पद्मद्वयी पादमयी निरास ॥ ६१ ॥

तस्या इति । श्रुतिश्रेणिशिखामणीनां श्रुतिपङ्क्तीनां चूडारत्नभूतानां तदुत्तमाङ्गवेदान्ततात्पर्यगोचरत्वात् तथात्वारोपः । नखानां दीधितिभिः किरणैः सकेसरा किञ्जल्कसहिता तस्याः पादमयी पादरूपा पद्मद्वयी प्रसाधिकानामलंकर्त्रीणां लोचनान्येव भृङ्गाः तेषां लौल्यं चाञ्चल्यम् । 'लोलश्चलसतृष्णयोः' इत्यमरः । निरास निरस्यति स्म । तासां लोचनानि रामणीयकेन निश्चलीचकारेत्यर्थः ॥ ६१ ॥

मुखेन्दुनिष्यन्दनिभैरमुष्या
मन्दस्मितैरिन्दुरवाप्तमान्द्यः ।
प्रायः प्रभूताद्भुतकान्तिलोभा-
न्नखात्मना तत्पदमेव भेजे ॥ ६२ ॥

**मुखेन्द्विति** । मुखेन्दोः ये निष्यन्दाः अमृतस्यन्दाः तन्निभैः तैरिव स्थितैः । अमुष्या मन्दस्मितैः हेतुभिः अवाप्तमान्द्यः प्राप्तनिकर्ष इव स्थितः इन्दुः प्रायो नूनं प्रभूता प्रचुरा अद्भुता या कान्तिः तत्र लोभात् नखात्मना नखरूपेण तत्पदं तस्याः चरणमेव भेजे सिषेवे । तत्पदसेवापुण्येन समीहितकान्तिः लभ्यत इति धियेति भावः ॥ ६२ ॥

अलक्षि देवैरवतारलक्ष्म्या-
स्तस्याः शुभा पादनखेन्दुपङ्क्तिः ।
आगामिकल्पेष्वधिकारलोभा-
त्तारावलिस्तत्पदमाश्रितेव ॥ ६३ ॥

**अलक्षीति** । अवतारलक्ष्म्याः अवताररूपायाः श्रियः तस्याः शुभा मनोज्ञा पादनखा इन्दव इव तेषां पङ्क्तिः आगामिकल्पेषु भविष्यत्कल्पेषु अधिकारलोभात् तत्पदमाश्रिता तारावलिः नक्षत्रपङ्क्तिरिव देवैः अलक्षीत्युत्प्रेक्षा । आधिकारिकपदानां लक्ष्मीचरणसेवालभ्यत्वमाधिकारिकत्वात् देवाः जानन्तीति देवैरित्युक्तम् ॥ ६३ ॥

यातेन मञ्जीररवैश्च तस्याः
प्रायः पराभूतगतिप्रणादाः ।
शिक्षाविशेषार्थमिवाधिचक्रुः
पादानुवृत्तिं प्रणयेन हंसाः ॥ ६४ ॥

**यातेनेति** । तस्याः रुक्मिण्याः यातेन गमनेन । भावे क्तः । मञ्जीररवैः नूपुरशिञ्जितैश्च प्रायो नूनं पराभूतगतिप्रणादाः तिरस्कृतगमनकूजिताः हंसाः शिक्षाविशेषार्थं अभ्यासातिशयार्थमिव प्रणयेन गमनकूजितै-

साम्याहितसजातीयभ्रान्तिकृतेन स्नेहेन पादानुवृत्तिं तस्याः चरणानुवृत्तिमधिचक्रुः आरेभिरे ॥ ६४ ॥

रराज दिव्यैरधिराजचिह्नैः
श्लाघापदं तत्पदमागमानाम् ।
अश्मानमास्थापयता परस्ता-
द्यत्पाणिना विश्वपतेरवाप्यम् ॥ ६५ ॥

**ररजेति** । आगमानां वेदानां श्लाघापदं श्लाघनस्य विषयभूतं तत्पदं तस्याश्चरणं दिव्यैः लोकोत्तरैरधिराजचिह्नैः अधिको राजा अधिराजः । प्रादिसमासः । तल्लक्षणैः ध्वजकलशच्छत्रादिरेखाभिः रराज यदस्याः पदं परस्ताद्भाविनि विवाहकाले । परशब्दाद्भाविकालवृत्तेः विभाषा परावराभ्यामिति सप्तम्यर्थेऽस्तातिप्रत्ययः । अश्मानमास्थापयता आतिष्ठेममश्मानमिति मन्त्रेण दृषदमाक्रमयता विश्वपतेरखिलनायकस्य कृष्णस्य पाणिना अवाप्यं प्राप्यं तत्तस्याः पदं तादृक् भाग्यसूचकैः चिह्नैर्विभातीत्यर्थः ॥ ६५ ॥

अतीत्य कृच्छ्रात्समुदायशोभां
प्रत्यङ्गसौन्दर्यपरा दिदृक्षा ।
पर्यभ्रमत्प्राप्तविहारडोला
पुष्पेषु भृङ्गीव मुहुः सखीनाम् ॥ ६६ ॥

**अतीत्येति** । सखीनां प्रत्यङ्गसौन्दर्यपरा रुक्मिण्याः प्रत्यवयवं यत्सौन्दर्यं तद्विषयिणी दिदृक्षा द्रष्टुमिच्छा समुदायशोभां सर्वावयवसमुदायस्य कान्तिं कृच्छ्रादतीत्य यत्नेनातिक्रम्य । अतिरमणीयत्वात् सापि झटिति अत्येतुं न समर्था इति भावः । पुष्पेषु भृङ्गीव प्राप्तः विहार इतस्ततो

भ्रमणलीलैव डोला प्रेङ्खोलिका यया तथाभूता सती मुहुः पुनः पुनः पर्यभ्रमत् भ्रमति स्म । सर्वेषामप्यङ्गानां अतिहृद्यतया सर्वत्र चापलादेकमवलम्बनं विना त्वरितो भ्रमति स्मेत्यर्थः । कृच्छ्रादिति करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्येति करणे पञ्चमी ॥ ६६ ॥

शृङ्गारयोनेरिव शिल्पविद्यां
दिव्यां त्रिलोक्या इव दिष्टवृद्धिम् ।
सीमान्तरेखामिव संपदस्तां
जगुः स्त्रियो जङ्गमरत्नसृष्टिम् ॥ ६७ ॥

**शृङ्गारेति ।** शृङ्गारयोनिः मन्मथः । 'शृङ्गारयोनिः श्रीपुत्रः' इति मन्मथपर्यायेष्वमरः । तस्य शिल्पविद्यामिवाद्भुतवस्तुनिर्माणकौशलमिव त्रिलोक्याः दिव्यामप्राकृतां सर्वोत्तरां दिष्टवृद्धिं भाग्यवृद्धिमिव संपदः सौन्दर्यादिसमृद्धेः सीमान्तरेखाम् अवधिभूम्यवसानश्रेणीमिव च स्थितां तां स्त्रियः तद्दर्शिन्यः अन्तःपुरयोषितः जङ्गमरत्नसृष्टिं जगुः गायन्ति स्म । सञ्चारिरत्नरूपा काचिदियं ब्रह्मणः सृष्टिरित्यूचुरित्यर्थः ॥ ६७ ॥

वयस्यया भीष्टवरानुयोगे
सापश्यदात्मानममन्दलज्जा ।
असूचयन्नूनमनेन तस्याः
स्वलक्षणं शौरिमनन्यलक्ष्यम् ॥ ६८ ॥

**वयस्ययेति ।** वयस्यया स्निग्धया सख्या अभीष्टवरानुयोगे अभिमतस्य पत्युः प्रश्ने कृते सति । 'प्रश्नोऽनुयोगः प्रच्छा च' इत्यमरः । सा रुक्मिणी अमन्दलज्जा सती आत्मानमपश्यत् अवनतमुखी स्वात्मानमेव

पश्यति स्म। अनेन स्वात्मदर्शनेन स्वस्य लक्षणानाविर्लक्षणानि यस्य तं स्वानुरूपं शौरिमनन्यलक्ष्यं अनितरप्रख्येयं यथा तथा तस्याः वयस्यायाः नूनमसूचयत्। व्याहृत्य कथने इतरेऽपि ज्ञास्यन्तीति स्वात्मदर्शनेन स्वानुरूपः कृष्ण एव वरोऽभिमत इति विदग्धायाः अस्याः सूचनं कृतवतीवेत्युत्प्रेक्षा ॥ ६८ ॥

अलिप्सत श्वेव हविस्तदेनां
दैत्यस्वभावो दमघोषजन्मा।
तस्मै च कृष्णैकमनोरथां तां
रूपाधिकां दातुमियेष रुक्मी ॥ ६९ ॥

अलिप्सतेति। तदा यौवनसमये दैत्यस्वभावः असुरप्रकृतिः दमघोषात् चैद्यराजात् जन्म यस्य सः शिशुपालः एनां रुक्मिणीं श्वा हविः पुरोडाशादिकमिव अलिप्सत लब्धुमैच्छत्। रुक्मी तदग्रजश्च कृष्णैकमनोरथां कृष्णे एकः एकत्वं प्राप्त इव ततो भेत्तुमशक्यः मनोरथो यस्यास्तां रूपेणाधिकां तां रुक्मिणीं तस्मै शिशुपालाय दातुमियेष इच्छति स्म ॥ ६९ ॥

परस्परं भूषयतः प्रतीका-
नौद्वाहिकं मङ्गलमुद्वहन्त्याः।
प्रायः स्वदीप्तेरतिरोधिमिच्छ-
न्त्यावारयन्नाभरणानि तस्याः ॥ ७० ॥

परस्परमिति। रुक्मिणी शिशुपालाय दातव्येति विवाहे निश्चिते सति औद्वाहिकमुद्वाहप्रयोजकं मङ्गलं माल्यानुलेपनादिकं उद्वहन्त्यास्तस्याः

परस्परं भूषयतः अन्योन्यस्याभरणभूतान्, प्रतीकानवयवान् । 'अङ्गं प्रतीकोऽवयवः' इत्यमरः । आभरणानि हारकेयूरादीनि कर्तॄणि प्रायो नूनं स्वदीप्तेः स्वीयां प्रभायाः अतिरोधिमतिरोधानम् इच्छन्ति सन्ति आवारयन् आवृण्वन्ति स्म । वृञ् वरणे इति चुरादिमध्ये पाठात् स्वार्थे णिच् । अङ्गानामनावरणे तेषां प्रभाभिराभरणप्रभास्तिरस्क्रियेरन्निति भावः ॥ ७० ॥

लावण्यकल्पद्रुममञ्जरीं तां
शृङ्गारदिग्वारणवैजयन्तीम् ।
सौन्दर्यदुग्धोदसुधाप्रसूतिं
सैरन्ध्रिकाः प्रेक्ष्य मिथः शशंसुः ॥ ७१ ॥

**लावण्येति** । लावण्यं कान्तिरेव कल्पद्रुमः तस्य मञ्जरीं कल्पद्रुमस्य मञ्जरीमिव लावण्यस्यापि सारभूतां शृङ्गारदिग्वारणवैजयन्तीं शृङ्गाररस एव दिग्गजः तस्य पताकाम् । यथा पताका दिग्गजं परिष्करोति तथा शृङ्गाररसं स्वयं परिष्कुर्वतीम् । सौन्दर्यमेव दुग्धोदस्तस्य सुधाप्रसूतिमसृतोत्पत्तिमिव सारभूतां रुक्मिणीं प्रेक्ष्य सैरन्ध्रिकाः मण्डिकाः मिथः शशंसुः अन्योन्यं तुष्टुवुः ॥ ७१ ॥

व्यामातिरिक्तस्तनकुम्भभूम्ना
व्याप्ताकृतिं यौवनकुञ्जरेण ।
प्रसाधयन्त्यः पतिदेवतास्तां
नाथोचितां प्रेक्ष्य न तृप्तिमापुः ॥ ७२ ॥

**व्यामेति** । व्यामः स्वस्वपार्श्वप्रसारितयोः बाह्वोरन्तरम् । 'व्यामो

बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम्' इत्यमरः। तदतिरिक्तस्य तेनापि परिमातुमशक्यस्य स्तनकुम्भस्य कलशसदृशस्य स्तनस्य भूम्ना विपुलतया स्फीतत्वेन। कुञ्जरपक्षे व्यामातिरिक्तस्तनसदृशस्य कुम्भस्य शिरोवयवस्य भूमा यस्येति योज्यम्। स्तनकुम्भेति पुरोपमितसमासः उत्तरत्र मध्यमपदलोपी समासः। बहुशब्दात् विपुलवृत्तेरिमनिचि बहोर्लोपो भू च बहोरिति इकारलोपे बहोर्भू इत्यादेशे च सति भूमेति रूपम्। 'बहुः स्याद्विपुले त्र्यादिसंख्यायामभिधेयवत्' इति विश्वः। यौवनकुञ्जरेण व्याप्ताकृतिं नायस्य कृष्णस्य उचितां तां रुक्मिणीं प्रसाधयन्त्यो भूषयन्त्यः पतिदेवताः पतिव्रताः प्रेक्ष्य तृप्तिं नापुः॥ ७२॥

मौलौ सुकेश्याः स्फुटरश्मिजालं

मुक्तामयं जालकमाबबन्धुः।

क्रीडोचितं कृष्णमृगं गृहीतुं

तेन स्मरो वागुरिकस्तदाभूत्॥ ७३॥

मौलाविति। सुकेश्याः शोभनाः केशाः यस्यास्तस्याः रुक्मिण्याः मौलौ धम्मिल्ले। 'मौलिः किरीटे धम्मिल्ले' इति विश्वः। स्फुटरश्मिजालं व्यक्तकिरणसमूहं मुक्तामयं मौक्तिकग्रथितं तत्प्रचुरं जालकं शिरोभूषणविशेषमाबबन्धुः आबध्नन्ति स्म। प्रसाधिका इति शेषः। तदा तस्मिन् समये तेन जालकेन स्मरः कामः क्रीडोचितं रुक्मिण्या सह क्रीडायाः योग्यं कृष्ण एव मृगः तं ग्रहीतुम्। बालकादिक्रीडोचितं कृष्णसारं ग्रहीतुमित्यपि प्रतीयते। वागुरिकोऽभूत् वागुरा मृगबन्धिनी तया चरतीति वागुरिकः। तेन चरतीत्यर्थे प्राग्वहतीयष्ठक्प्रत्ययः। तथाभूतोऽभूत्। वागुरापि स्फुरद्रश्मिजाला व्यक्तसूत्रजालेति भावः॥ ७३॥

अनन्यदृष्टिं विततान ताम-
प्यादर्शसंक्रान्तिविशेषदृश्यम् ।
प्रसाधनैः प्राप्तगुणैः प्रतीक्ष्यं
तस्या मुखं तामरसायताक्षम् ॥ ७४ ॥

अनन्येति । तामरसायताक्षं तामरसदलदीर्घलोचनं प्राप्तगुणैः प्रत्यग्रोन्मृष्टतया तदङ्गसंपर्केण वा प्राप्तोत्कर्षैः प्रसाधनैः भूषणैः हेतुभिः प्रतीक्ष्यं पूज्यं रमणीयमिति यावत् । आदर्शसंक्रान्तिविशेषदृश्यं दर्पणे प्रतिबिम्बतया संक्रमणेनातिशयेन रमणीयं तस्याः मुखं तामप्यनन्यदृष्टिम् अनन्यविषयलोचनां विततान चकार । आदर्शे स्वमुखशोभां दृष्ट्वा स्वयमपि न तृप्ताभूत्, किमुतान्ये इति भावः ॥ ७४ ॥

अंसावलम्बिन्यसितेक्षणायाः
कम्पोज्ज्वला काचन रत्नमाला ।
अलक्ष्यतोल्लासितरम्यरश्मिः
कामार्पिता कान्तिविहारडोला ॥ ७५ ॥

अंसेति । असितेक्षणायाः असितलोचनायाः रुक्मिण्याः अंसावलम्बिनी अंसे अवलम्बमाना कम्पोज्ज्वला चाञ्चल्येन दीप्ता उल्लासितरम्यरश्मिः उद्गमितरम्यरत्नकिरणा काचन काचिदमेयरूपा रत्नमाला कामार्पिता कान्तेः वक्षःस्थलगतायाः विहारार्थडोलेवालक्ष्यतादृश्यत । डोलाप्युल्लासितरम्यसूत्रचलनेन रुचिरा भवतीति भावः ॥ ७५ ॥

रराज मुक्ताभिरवाप्तकेनं
रत्नाङ्गदं प्राप्तगुणं तदङ्के ।

प्रवाहवृत्तेः परिवृत्तिभेदा-
न्महीयसी मण्डलितेव कान्तिः ॥ ७६ ॥

**रराजेति** । तदङ्गे तस्याः अङ्गे प्राप्तगुणं प्राप्तोत्कर्षं मुक्ताभिरवाप्त-फेनं अधिगतफेनं फेनाकारदृश्यमौक्तिकजालशालीति यावत् । रत्नाङ्गदं मणिमयकेयूरं प्रवाहवृत्तेः प्रवाहस्वभावस्य परिवृत्तिभेदात् विवर्तनविशेषात् मण्डलिता संजातमण्डलाकारा महीयसी अतिशयेन महती कान्तिरिव रराज ॥ ७६ ॥

अभासतात्मस्मितसौम्यभासा
हारेण हृद्येन जगत्प्रतीक्ष्या ।
प्रियस्य चन्द्रं हृदयाद्विधातुः
प्राप्तानुसारेव निसर्गशुद्धम् ॥ ७७ ॥

**अभासतेति** । जगत्प्रतीक्ष्या जगतां पूज्या सा रुक्मिणी आत्मस्मि-तसौम्यभासा निजमन्दहासरुचिरत्विषा हृद्येन हृदयंगमेन हारेण हृदया-न्निसर्गशुद्धं चन्द्रं विधातुः निर्मातुः । तृन्प्रत्ययोऽयमिति द्वितीया । प्रियस्य कृष्णस्य प्राप्तानुसारेवाभासत ॥ ७७ ॥

मनुष्यताकञ्चुकितात्मभूम्नः
काले चकाशे कुचकञ्चुकश्रीः ।
रत्नाचले भोगिशयप्रियायाः
स्वतल्पनिर्मोक इवावलीनः ॥ ७८ ॥

**मनुष्यतेति** । मनुष्यतया मनुष्यभावेन कञ्चुकितः संजातकञ्चुकः संवृतः आत्मभूमा निजमहिमा यस्यास्तस्याः भोगिशयप्रियायाः भोगिनि

शेत इति भोगिशयुः पुरुषोत्तमः तत्प्रियायाः रुक्मिण्याः काले औद्वाहिकमण्डनसमये कुचकञ्चुकस्य श्रीः संपत् रत्नाचले मेरावबलीनः लग्नः स्वतल्पनिर्मोकः कल्पान्तेऽस्याः शय्याशेषः पत्युस्तल्पमपीति भावः । तस्य निर्मोकः कञ्चुक इव चकाशे । अत्युन्नते तस्याः स्तने धवलः कञ्चुकः रत्नाचले शेषनिर्मोक इव रराजेत्यर्थः ॥ ७८ ॥

आदर्शबिम्बेन तदङ्गकान्ते-
रक्षाम्यता निष्प्रतिमत्ववादम् ।
प्रतिप्रवृत्तिं प्रतिमां विधाय
प्रख्यापिता वृत्तवतामपीर्ष्या ॥ ७९ ॥

**आदर्शेति** । तदङ्गकान्तेः तस्या रुक्मिण्या अङ्गकान्तेः निष्प्रतिमत्ववादम् अनुपमत्वगोचरलोकवादमक्षाम्यता असहमानेनादर्शबिम्बेन दर्पणमण्डलेन प्रतिप्रवृत्तिमभिमुखवर्तनम् । विरुद्धचरितमपि प्रतीयते । प्रतिमां प्रतिबिम्बं विधाय संपाद्य वृत्तवतां प्रशस्तवृत्तानामपि ईर्ष्या परोत्कर्षासहिष्णुता प्रख्यापिता । वृत्तवता वर्तुलाकारवतापि दर्पणेनानुपमत्वेन प्रसिद्धायाः स्तनकान्तेः प्रतिद्वन्द्विसंपादनादिति भावः । अनेन दर्पणागता तत्प्रतिमैव तत्सदृशी नान्यास्तीति व्यज्यते ॥ ७९ ॥

अभिन्नरूपामनुवेलभिन्ना-
त्मसाधनादभ्यधिकां प्रसत्तिम् ।
विलोकयन्ती जनता तदीयां
व्यावर्तयामास ततो न दृष्टिम् ॥ ८० ॥

**अभिन्नेति** । अभिन्नरूपां सदा एकरूपां अनुवेलभिन्नाद्बन्धुजनैः

पृथक् पृथक् क्रियमाणतया प्रतिकलं भिन्नात् प्रसाधनादलंकारात् अधिकां तदीयां तस्या रुक्मिण्या इमां प्रसत्तिं प्रसादं स्वतः सिद्धं सौन्दर्यं विलोकयन्ती जनता ततो विषयाद्दृष्टिं न व्यावर्तयामास। निर्निमेषं तस्याः प्रसत्तिमेव दृष्टवतीत्यर्थः ॥ ८० ॥

मुखेन्दुलावण्यसुधाप्रवाहे
मुहुः प्रतीपप्लवनोद्यतेन ।
तत्कर्णभूषामकरेण मन्ये
मन्दीकृता मन्मथलाञ्छनश्रीः ॥ ८१ ॥

**मुखेति** । मुखेन्दोः लावण्य एव सुधाप्रवाहे मुहुः पुनः पुनः प्रतीपप्लवनोद्यतेन अभिमुखसंचारोद्युक्तेन। मकरादयः प्रवाहे लब्धे तदाभिमुख्येन प्लवन्त इति स्वभावः । मकरकुण्डलयोर्मकरस्य वदनाभिमुख्येन निवेशादिह तथात्वारोपः । तत्कर्णभूषामकरेण तस्याः कर्णभूषयोः मकरेण मन्मथलाञ्छनश्रीः मदनकेतुरूपस्य मकरस्य शोभा मन्दीकृता अल्पीकृतेति मन्ये । ततोऽप्ययमेव सुतरां मोहनत्वादिगुणैरधिक इति निश्चिनोमीत्यर्थः ॥ ८१ ॥

प्रभाप्रवाहोदितसैकताभे
स्तनद्वये तामरसेक्षणायाः ।
तत्कंधराशङ्खमताल्लिकायाः
प्रसूतिराशङ्क्यत हारवृत्त्या ॥ ८२ ॥

**प्रभेति** । प्रभाप्रवाहैः उदितस्य सैकतस्य पुलिनस्य आभेव आभा यस्मिन् तस्मिन् तामरसेक्षणायाः पद्मलोचनायाः रुक्मिण्याः स्तनद्वये

हारवृत्त्या हारस्य वर्तनेन तत्कंधराशङ्खमतल्लिकायाः तस्याः कण्ठ एव प्रशस्तः शङ्खः ततः प्रसूतिराशङ्क्यत । तत्कण्ठगतहारमौक्तिकानामिति भावः । शङ्खो हि मुक्ताफलानि प्रसूत इति प्रसिद्धिः । प्रशस्तवाचिनो मतल्लिकाशब्दस्य शङ्खशब्देन प्रशंसावचनैश्चेति समासः ॥ ८२ ॥

स्वभावजादभ्यधिकं तदङ्गे-
ष्वासादितं सौरभमङ्गरागैः ।
स सर्वगन्धोऽपि यदन्वयेन
प्रभूतमामोदविशेषमृच्छेत् ॥ ८३ ॥

**स्वभावजादिति** । तदङ्गेषु तस्या अवयवेषु अङ्गरागैः विलेपनैः स्वभावसिद्धात् सौरभ्यादभ्यधिकं सौरभमासादितं प्राप्तम् । अङ्गरागास्तदङ्ग-संपर्के सति तत्सौरभसंक्रान्त्या अधिकसुरभयो बभूवुरित्यर्थः । यदन्वयेन येषां तदङ्गानामालिङ्गनादिसंपर्केण सर्वगन्धः सर्वप्रकारदिव्यसौरभशाल्यपि स कृष्णः प्रचुरामोदविशेषं सौरभविशेषमृच्छेत्प्राप्नुयात् । संभावनायां लिङ् । 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' इति परब्रह्मणः सर्वगन्धत्वमुक्तम् । तस्मिन्नप्यपूर्वं सौरभमासञ्जयतां तदङ्गानामन्वयादेकविधप्राकृतगन्धशालिनामङ्गरागाणां सौरभातिशयसंपत्तौ किमु वक्तव्यमिति भावः ॥ ८३ ॥

प्रतिक्रियामात्मतिरस्क्रियायाः
प्रायः स्वयं व्यापृतया विधातुम् ।
तदङ्गयोगोज्ज्वलरत्नधाम्ना
संछादितं मेखलयान्तरीयम् ॥ ८४ ॥

**प्रतिक्रियामिति** । आत्मतिरस्क्रियायाः अन्तरीयेण तस्याः तदङ्ग-

संपर्कविघटनरूपस्य तिरस्कारस्य प्रतिक्रियां प्रतीकारं तत्प्रयुक्तवैरनिर्यातनं स्वयं विधातुं कर्तुं प्रायो नूनं व्यापृतया तदङ्गयोगोज्ज्वलरत्नधाम्ना तस्याः रुक्मिण्याः अङ्गं प्रति भूषणत्वरूपेण तत्संबन्धेन उज्ज्वलानि दीप्तानि रत्नतेजांसि यस्यास्तया । तदङ्गशब्देन तदङ्गप्रभा वा लक्ष्यन्ते । मेखलया काञ्च्यान्तरीयं परिधानं संछादितम् । यथा कश्चिदिष्टार्थे प्रवृत्तः केनाचिन्निरोधे कृते स्वयमपि सहायसंपन्नः तस्य निरोधं करोति एवं मेखला अन्तरीयेण स्वस्यास्तदङ्गसंपर्कविरोधः कृत इति स्वयं रत्नधामसहिता तस्याच्छादनं कृतवतीत्यर्थः । अन्तर्धानवाचकस्य तिरस्क्रियाशब्दस्य तिरोधात्रर्थान्तरे लक्षणया प्रयोगः ॥ ८४ ॥

शिखण्डकानि श्रुतिसुन्दरीणां
चारूणि पादाभरणानि तस्याः ।
पदेषु संघर्षवशादिवास-
न्मिथः पुरोभागिपदास्पदानि ॥ ८५ ॥

शिखण्डकानीति । श्रुतय एव सुन्दर्यः । गौरादित्वात् ङीष् । तासां शिखण्डकानि चूडावत्त्वसंपादकानि । उपनिषच्छ्लाघनीयानीति यावत् । शिखण्डवच्छब्दात् तत्करोतीति णाविष्ठवद्भावे मतुब्लोपे ण्वुलप्रत्ययः । अत एव नपुंसकलिङ्गता । शिखण्डो बर्हचूडयोरिति विश्वः । चारूणि तस्याः पादाभरणानि नूपुरपादाङ्गुलीयकादीनि पदेषु पादविन्यासेषु मिथः अन्योन्यं संघर्षवशात् घर्षणायत्तत्वेन । वश आयत्ततायां स्यादिति विश्वः । पदेषु व्यवहारपदेषु भोग्यवस्तुषु वाक्येषु वा परस्परवशादित्यपि प्रतीयते इति । संघर्षो घर्षणस्पर्धे इति वैजयन्ती । तस्या इति पुरोभागिपदास्पदानि अग्रभागरूपं यत्पदं तदास्पदं येषां तथाभूतान्या-

सन् । पुरो भागीति पदम् । दोषैकदृक्पुरोभागीत्यमरः । तस्य गोचरीभूतान्यासामित्यपि प्रतीयते व्यवहारपदाविषये वा वक्तृत्वविषये वा परस्परबद्धस्पर्धाभिः मिथो क्षणवचनेन दोषैकदृश्य इति व्यपदेशं भजन्त इति भावः ॥

अनुक्षणं बन्धुजनैरमुष्या-
मामुच्यमानेषु विभूषणेषु ।
अयत्नतस्तानि तदन्तराले
कृतास्पदा केवलतात्यशेत ॥ ८६ ॥

अनुक्षणमिति । अमुष्यामेतस्यां रुक्मिण्यां बन्धुजनैरनुक्षणं क्षणे-क्षणे विभूषणेष्वामुच्यमानेषु सत्सु तदन्तराले तेषां भूषणानामन्तराले पूर्वभूषणविमोचनस्य विभूषणान्तरामोचनस्य च मध्यकाले अयत्नतः स्वयं संपादनयत्नं विना कृतास्पदा केवलता भूषणरहितता तानि भूषणानि अत्यशेत । स्वतःसिद्धा शोभा भूषणप्रयुक्तशोभातिशयवतीत्यर्थः ॥

निनीषतां देवगृहं यथैता-
माकल्पलक्ष्म्या समयोजयन्त ।
मुकुन्दसंस्पर्शमवाप्तुमर्हा
सैव स्थिरा धन्यतमा बभूव ॥ ८७ ॥

निनीषतामिति । देवगृहम् उत्सवे देवतागारं निनीषितां सेवार्थम् नेतुमिष्टां एनां रुक्मिणीं यया आकल्पलक्ष्म्या भूषणसंपदा समयोजयन्त संयोगं कृतवन्तः । बन्धुजना इति शेषः । सैव स्थिरा इतः परमौद्वाहिकमण्डनान्तराभावात् मुकुन्दसंस्पर्शमवाप्तुमर्हा सा कृष्णसंस्पर्शं प्राप्तुं

योग्या अत एव धन्यतमा आतिशयेन धन्या च बभूव । देवगृह एव रुक्मिण्याः कृष्णेन हरिष्यमाणत्वादिति भावः ॥ ८७ ॥

पतिव्रताः पार्थिवयोपितस्तां
प्रत्यङ्गसौन्दर्यनिमग्नभावाः ।
कृताशिषः कृष्णमनोरथस्था-
मारोप्य कर्णीरथमन्वगच्छन् ॥ ८८ ॥

**पतिव्रता इति** । कृष्णमनोरथस्थां कृष्णमनोरथे स्थितां तां रुक्मिणीं प्रत्यङ्गसौन्दर्यनिमग्नभावाः तस्याः प्रत्यवयवं यत्सौन्दर्यम्, तत्र निमग्नहृदयाः कृताशिषः रुक्मिणीविषये कृताशीर्वादाः पतिव्रताः पतिः भर्ता व्रतवत् श्रद्धेयो यासां ताः पतिदेवताः पार्थिवयोषितः राजस्त्रियः कर्णीरथं रथविशेषमारोप्यान्वगच्छन्ननुसरन्ति स्म । देवतासेवार्थमिति भावः । कर्णीरथः प्रवहणं डयनं च समं त्रयमित्यमरकोशव्याख्याने पुंसामंसैरुह्यमानः विमानाख्यो रथः कर्णीरथ इति क्षीरस्वामी । आरोहणस्य गतिविशेषत्वात् गत्यादिसूत्रेण द्विकर्मकता ॥ ८८ ॥

मङ्गल्यसंगीतसमेतयात्रा
मनुष्यदेवीभिरनुद्रुता सा ।
निनंसितैषा स्वयमेव देवी
नान्येति सद्भिर्निरणायि नाथा ॥ ८९ ॥

**मङ्गल्येति** । मङ्गल्यैः संगीतैः गीतनृत्तवाद्यैः समेता यात्रा यस्याः सा मनुष्यदेवीभिः मनुष्यदेवानां राज्ञां स्त्रीभिरनुद्रुता अनुसृता सा नाथा रुक्मिणी सद्भिः विद्वद्भिः निनंसिता नन्तुं नमस्कर्तुमिष्टा देवी एषा स्वय-

मेव नान्येति निरणायि निर्णीता । देवतानमस्काराय गच्छन्तीं तां पौरविद्वांसो दृष्ट्वा 'नमस्कर्तव्या देवता' एषैव एतदतिरेकेण कान्या देवता नम्येति तस्या दिव्यतेजसा निर्णीतवन्त इत्यर्थः ॥ ८९ ॥

भावान्तरेषु प्रतिपन्नलीला
पैतामहादीनि पदानि दातुम् ।
स्वदत्तशक्तेः कुहनामनुष्या
कुतश्चिदिष्टं स्वयमाशशंसे ॥ ९० ॥

भावान्तरेष्विति । अन्ये भावाः अवताराः भावान्तराणि । सुप्सुपेति समासः । तेषु पैतामहादीनि पदानि दातुं प्रतिपन्नलीला अङ्गीकृतलीला अवतारान्तरेषु स्वयं ब्रह्मादीनि स्थानानि लीलया दत्तवतीत्यर्थः । कुहनामनुष्या मायामनुष्या रुक्मिणी स्वदत्ता शक्तिः वरदानसामर्थ्यं यस्याः ततः । सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः इति स्वशब्दस्य पुंवद्भावः । कुतश्चिद्देवताविशेषादिन्द्राण्याः प्रसादतः । वासववल्लभाया इत्यग्रे दर्शनात् । स्वयमाशशंसे इयेष । इयमपि काचिल्लीलेति भावः ॥

प्रणम्य मूर्ध्ना निहितोपहारा-
मुत्तस्थुषीमुत्सवदेवतैनाम् ।
अवोचदारादशरीरिवाचा
परैरजय्यं पतिमाप्नुहीति ॥ ९१ ॥

प्रणम्येति । निहितोपहारां निवेदितोपायनां मूर्ध्ना प्रणम्य उत्तस्थुषीं उत्थितवतीमेनां रुक्मिणीमुत्सवदेवता उत्सवे पूजनीया देवता इन्द्राणी

आरात्समीपे अशरीरिवाचा परैरजय्यं जेतुमशक्यं पतिमाप्नुहीत्यवोचत् । क्षय्यजय्यौ शक्यार्थे इति निपातः ॥ ९१ ॥

पत्या निजेन परिणीतिमवाप्तुकामा
लब्ध्वा वरं ललितमुत्सवदेवतायाः ।
तेनैव सा समसमीहितसिद्धिरासी-
न्मानाधिका जगति मन्मथमन्मथेन ॥ ९२ ॥

पत्येति । निजः आत्मीयः पतिः कृष्णः तत्पतित्वस्यानादिसिद्धत्वात् । तेन परिणीतिं तत्कर्तृकं विवाहम् अवाप्तुकामा जगति मानाधिका बहुमानेनाधिका लोकपूज्या रुक्मिणी उत्सवदेवतायाः इन्द्राण्याः सकाशात् ललितमीप्सितं वरं लब्ध्वा । ललितं हारभेदे स्यादीप्सिते रुचिरेऽपि चेति विश्वः । मन्मथमन्मथेन मन्मथस्यापि मन्मथेनातिसुन्दरेण तेन कृष्णेनैव समसमीहितसिद्धिः तुल्येष्टसिद्धिरासीत् । तस्या अभिमतलाभेन मनोरथपूर्तौ कृष्णस्य अभिमतरमणीलाभेन मनोरथपूर्तिरेव दृष्टान्तः नान्योऽस्तीत्युभयोरप्यन्योन्यानुरागस्य परा काष्ठा एवमेवकारेण व्यज्यते । पत्या परिणीतिमिति अन्तर्धौ येनादर्शनमितिवत् कर्त्रयोगे तृतीया युक्ता । वसन्ततिलका वृत्तम् । उक्ता वसन्ततिलका तभजाजगौ ग इति लक्षणात् ॥ ९२ ॥

अथोभयोः समीहितसिद्धिमेव कृष्णसंनिकर्षप्राप्तिवर्णनेन विशदयति—

ऊरुः सव्यो नयनकमलं भ्रूलता चापि तस्याः
प्रीमेपन्त प्रियमुपगतं सूचयन्ति स्वहृष्या ।

आरादासीद्बहुतुलसीगन्धसौम्यः समीरः
प्रत्यासन्नं मुहुरुदचरत्पाञ्चजन्यप्रणादः ॥ ९३ ॥

इति श्रीमत्कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
यादवाभ्युदये काव्यरत्ने
द्वादशः सर्गः ॥

ऊरुरिति । अथ वरलाभानन्तरं तस्याः रुक्मिण्याः सव्यः ऊरुः नयनकमलं भ्रूलता चापि । सव्य इति विशेषणं यथोचितलिङ्गविपरिणामेन नयनकमलभ्रूलतयोरप्यन्वेति । प्रियमुपगतं स्ववृत्त्या सूचयन्ति एतानि कृष्णं संनिकृष्टं ज्ञापयन्ति सन्ति प्रावेपन्त प्रास्फुरन् । किं च बहुतुलसीगन्धसौम्यः बहुलतुलसीपरिमलमनोहरः समीरः आरात्समीपे आसीत् । पाञ्चजन्यप्रणादः भगवच्छङ्खध्वनिश्च प्रत्यासन्नं यथा तथा मुहुः पुनः पुनः उदचरदुद्गतोऽभवत् । सूचयन्तीत्यत्र नपुंसकमनपुंसकेनेति नपुंसकशेषता । मन्दाक्रान्ता वृत्तम् , मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेदिति लक्षणात् ॥ ९३ ॥

इति श्रीमद्भरद्वाजकुलतिलकविश्वजिद्याजिश्रीरङ्गराजा-
ध्वरिवरसूनुना श्रीमदप्पयदीक्षितेन विरचिते
यादवाभ्युदयव्याख्याने
द्वादशः सर्गः ।



## श्लोकानुक्रमणिका ॥



New Delhi
LIBRARY

